BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1209.

---

# परीक्षामुखसूत्रम्

# (PARĪKṢĀMUKHA-SŪTRAM,)

A DIGAMBARA JAINA WORK ON LOGIC (NYĀYA)

BY

MAṆIKYA NANDI

TOGETHER WITH THE COMMENTARY CALLED

# परीक्षामुखलघुवृत्तिः

# PARĪKṢĀMUKHA-LAGHUVṚTTIḤ

BY

ANANTA VĪRYA.

EDITED BY

MAHĀMAHOPĀDHYĀYA SATIS CHANDRA VIDYĀBHŪṢAṆA,

M.A., Ph.D.

*Professor of Sanskrit and Pali, Presidency College, Calcutta; Joint Philological Secretary, Asiatic Society of Bengal; and Fellow of the Calcutta University.*

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1909.

CONTENTS.



## परीक्षामुखसूत्रम् ।



## परीक्षामुखलघुवृत्तिः ।

# INTRODUCTION.

The text of **Parīkṣāmukha-sūtra** together with its commentary called **Parīkṣāmukha-laghuvṛtti** printed in this fasciculus is based on three manuscripts of which one was procured from Jaipur, Rajputana, another from the Deccan College, Poona, and the third from the Asiatic Society of Bengal.

The **Parīkṣāmukha-sūtra** is a well-known Digambara Jaina work on Logic (Nyāya) divided into six chapters which treat respectively of (1) the characteristic of valid knowledge, *pramāṇa-svarūpa*; (2) direct apprehension or perception, *pratyakṣa*; (3) indirect apprehension, *parokṣa*; (4) object of valid knowledge, *viṣaya*; (5) the result of valid knowledge, *phala*; and (6) the semblances or fallacies, *ābhāsa*.

The author of the Sūtra is named Māṇikya Nandi[1] or Ratna Nandi,[2] who belonged to the Digambara sect. In chapter vi of the work he mentions the Bauddha,[3] Mīmāṁsaka,[4] Sāṁkhya,[5] Laukāyatika,[6] Saugata,[7] Yauga,[8] Prābhākara[9] and Jaiminīya[10] systems of philosophy. In chapter iii he refers to a certain philosopher[11] who distinguishes three phases of the reason or middle term. This philosopher is evidently Dharmakīrti who divides the reason or

---

1 हेयस्य सकलतमपायसमस्तदोषं
बोध्य प्रपञ्चयिरं रचितं समस्य ।
माणिक्यनन्दिविभुना शिष्यबोधहेतोः
मानस्वरूपमधुना स्फुटमभ्यधायि ॥ (Parīkṣāmukha-laghuvṛtti, chapter i, p. 13).

2 प्रत्यक्षेतरभेदभिन्नममलं मानं द्विधेवोदितं
देवैर्दिव्यगुणैर्विचार्य विधिवत् संख्यातवेः संख्यात् ।
मानात्मत्मिति नरिमरूयभिदितं श्रीरत्ननन्द्याकरैः
तत्त्वाख्यानमहो विशुद्धधिषणैर्बोद्धव्यमध्यात्मनम् ॥ (Parīkṣāmukha-laghuvṛtti, chapter ii, p. 25).

3 Aphorism 6. 4 Aphorism 7, 13. 5 Aphorism 27, 57.
6 Aphorism 56. 7 Aphorism 57. 8 Aphorism 57.
9 Aphorism 57. 10 Aphorism 57.

11 को वा त्रिधा हेतुमुक्त्वा समर्थयमानो न पक्षयति (Parīkṣāmukha-sūtra, chap. iii, aph. 31).

middle term[1] into three kinds according to the relation which it bears to the major term.

Māṇikya Nandi is stated in the **Parīkṣāmukha-laghuvṛtti** to have got his inspiration in Logic from Akalaṅka Deva[2] (often called simply Akalaṅka[3] or Deva[4]) who flourished about 750 A.D.[5] The approximate date in which Māṇikya Nandi lived is 800 A.D.[6]

The **Parīkṣāmukha-laghuvṛtti** is also known by the names of **Parīkṣāmukha-pañjikā**[7] and **Prameyaratnamālā**.[8] It is the work of a Digambara logician named Anantavīrya,[9] the famous author of a gloss on Akalaṅka's **Nyāyaviniścaya** called **Nyāyaviniścaya-vṛtti**. Anantavīrya observes that it was at the request of Hirapa, the beloved son of Vaijeya, that he undertook for the sake of Śāntiṣeṇa to write the **Parīkṣāmukha-pañjikā**.[10] Now, Śāntiṣeṇa, supposed to be identical with Śānti Sūri, died in saṁvat 1096 or A.D. 1039.[11] His contemporary Anantavīrya must, therefore, have flourished

1 त्रीण्येव च लिङ्गानि । अनुपलब्धिः स्वभावकार्ये चेति (Dharmakīrti's Nyāyabindu. Peterson's edition, chap. ii, p. 104).

2 अकलङ्कवचोऽम्भोधेरुद्दध्रे येन धीमता ।
न्यायविद्यामृतं तस्मै नमो माणिक्यनन्दिने ॥ (Parīkṣamukha-laghuvṛtti, chap. i, opening lines.)

3 अकलङ्कशशाङ्कैर्यत् प्रकटीकृतमखिलमाननिभनिकरम् ।
तत् संक्षिप्तं सूरिभिरुरुमतिभिर्व्यक्तमेतेन ॥ (Parīkṣāmukha-laghuvṛtti, chap. vi, p. 54).

4 सूक्ष्मसंव्यवहाराभ्यां प्रत्यक्षमुपदर्शितम्
देवाक्तमुपजीवद्भिः सूरिभि र्ज्ञापितं मया ॥ (Parīkṣāmukha-laghuvṛtti, chap. ii, p. 25).

5-6 *Vide* my "History of the Mediaeval School of Indian Logic" published by the Calcutta University, pp. 26, 28.

7 *Vide* footnote 10.

8 इति प्रमेयरत्नमालापरनामधेया परीक्षामुखवृत्तिः समाप्ता ॥ (Parīkṣāmukha-laghuvṛtti, chap. vi, p. 55).

9 तस्योपरोधवशतो विशदोरुकीर्त्तेः
माणिक्यनन्दिकृतशास्त्रमगाधबोधम् ।
स्पष्टीकृतं कतिपयैर्वचनैरुदारैः
बालप्रबोधकरमेतदनन्तवीर्यैः ॥ (Parīkṣāmukha-laghuvṛtti, chap. vi, p. 55).

10 वैजेयप्रियपुत्रस्य हीरपस्योपरोधतः ।
शान्तिषेणार्थमारब्धा परीक्षामुखपञ्जिका ॥ (Parīkṣāmukha-laghuvṛtti, opening lines).

11 *Vide* the Indian Antiquary, vol. xi, p. 253; and Dr. R. G. Bhandarkar's Report on Sanskrit MSS. during 1883-84, p. 129.

about that time. He lived undoubtedly before the 14th century A.D., for he is mentioned by Mādhavācārya in the **Sarvadarśana-saṁgraha** (chapter on Jaina darśana).

In the **Parīkṣāmukha-laghuvṛtti** Anantavīrya mentions numerous philosophers and philosophical systems and quotes several important couplets which have yet to be identified. It is interesting to note that Vidyānanda's **Āptaparīkṣā**[1] is mentioned as an old work while his **Āptamīmāṁsālaṅkāra** (also called **Aṣṭasāhasrī**) is designated as **Devāgamālaṅkāra**[2] or simply **Alaṅkāra.**[3]

Besides Anantavīrya's work, there is another very excellent commentary on the **Parīkṣāmukha-sūtra** called **Prameya-kamala-mārtaṇḍa** by a Digambara logician named Prabhācandra whose date is generally assigned at the first quarter of the 9th century A.D.[4] Prabhācandra who was a disciple of Padma Nandi[5] speaks of Māṇikya Nandi[6] and Akalaṅka Deva[7] in very high terms.

*Presidency College,*
*Calcutta, May,* 1909.

SATIS CHANDRA VIDYABHUSANA

[1] तदुक्तमत्र पुरातनै विस्तरेणाभिहितम आप्तपरीक्षादौ (Parīkṣāmukha-laghuvṛtti, chap. ii, p. 23).

[2] अपरमप्यत्र विस्तरेण देवागमालङ्कारे चिन्तितमिति नेह प्रतन्यते (Parīkṣāmukha-laghuvṛtti, chap. ii, p. 24).

[3] विस्तरेणैतदलङ्कारे प्रतिपादितं बोद्धव्यम् (Parīkṣāmukha-laghuvṛtti, chap. ii, p. 17).

[4] *Vide* my "History of the Mediæval School of Indian Logic" published by the Calcutta University. pp. 33-34.

[5] गुरुः श्रीपद्मनन्दिसैद्धान्तिकशिष्योऽनेकगुणालयः
प्रभाचन्द्रश्चिरं जीयाद्रत्ननन्दिपदे रतः ॥ (Prameyakamala-mārtaṇḍa, MSS. of A.S.B., chap. vi, p. 118).

[6] शास्त्रं करोमि वरमल्पतरावबोधो
माणिक्यनन्दिपदपङ्कजसत्प्रसादात् ॥ (Prameyakamala-mārtaṇḍa, MSS. of A.S.B., chap. i, p. 1).

[7] श्रीमदकलङ्कार्थोऽव्युत्पन्नप्रज्ञैरवगन्तुं न शक्यते इति तद्व्युत्पादनाय करतलामलक-
वदर्थमुद्धृत्य प्रतिपादयितुकामस्तत्परिज्ञानानुग्रहे वा प्रेरितस्तदर्थप्रतिपादनप्रवणं प्रकरणमिदमा
चार्यः प्राह (Prameyakamala-mārtaṇḍa, MSS. of A.S.B., chap. i, p. 1).

# परीक्षामुखसूत्रम् ।

प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्ययः ।
इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं लघीयसः[१] ॥

स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् ॥१॥ हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् ॥२॥ तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवत् ॥३॥ अनिश्चितोऽपूर्वार्थः ॥४॥ दृष्टोऽपि समारोपात्तादृक् ॥५॥ स्वोन्मुखतया प्रतिभासनं स्वस्य व्यवसायः ॥६॥ अर्थस्येव तदुन्मुखतया ॥७॥ घटमहमात्मना वेद्मि ॥८॥ कर्मवत्कर्तृकरणक्रियाप्रतीतेः ॥९॥ शब्दानुच्चारणेऽपि स्वस्यानुभवनमर्थवत् ॥१०॥ को वा तत्प्रतिभासिनमर्थमध्यक्षमिच्छंस्तदेव तथा नेच्छेत् ॥११॥ प्रदीपवत् ॥१२॥ तत्प्रामाण्यं स्वतः परतश्च ॥१३॥

इति प्रमाणस्य स्वरूपोद्देशः प्रथमः ॥१॥

तद्द्वेधा ॥१॥ प्रत्यक्षेतरभेदात् ॥२॥ विशदं प्रत्यक्षम् ॥३॥ प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम् ॥४॥ इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकम् ॥५॥ नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत् ॥६॥ तदन्वयव्यतिरेकानुविधानाभावाच्च केशोण्डुकज्ञानवन्नक्तंचरज्ञानवच्च ॥७॥ अतज्जन्यमपि तत्प्रकाशकं प्रदीपवत् ॥८॥ स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं व्यवस्थापयति ॥९॥ कारणस्य च परिच्छेद्यत्वे करणादिना व्यभिचारः ॥१०॥ सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम् ॥११॥ सावरणत्वे करणजन्यत्वे च प्रतिबन्धसम्भवात् ॥१२॥

इति प्रत्यक्षोद्देशो द्वितीयः ॥२॥

---

१ लघीयसो विनेयानुद्दिश्य । इति टीका ।

परोक्षमितरत् ॥१॥ प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदम् ॥२॥ संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः ॥३॥ स देवदत्तो यथा ॥४॥ दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि ॥५॥ यथा स एवायं देवदत्तः गोसदृशो गवयः गोविलक्षणो महिष इदमस्माद्दूरं वृक्षोऽयमित्यादि ॥६॥ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः इदमस्मिन् सत्येव भवत्यसति न भवत्येवेति च ॥७॥ यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ॥८॥ साधनात् साध्यविज्ञानमनुमानम् ॥९॥ साध्याविनाभावित्वेन निश्चितो हेतुः ॥१०॥ सहक्रमभावनियमोऽविनाभावः ॥११॥ सहचारिणोर्व्याप्यव्यापकयोश्च सहभावः ॥१२॥ पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः ॥१३॥ तर्कात्तन्निर्णयः ॥१४॥ इष्टमबाधितमसिद्धं साध्यम् ॥१५॥ सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदम् ॥१६॥ अनिष्टाध्यक्षादिबाधितयोः साध्यत्वं माभूदिति इष्टाबाधितवचनम् ॥१७॥ न चासिद्धवदिष्टं प्रतिवादिनः ॥१८॥ प्रत्यायनाय हीच्छा वक्तुरेव ॥१९॥ साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मी ॥२०॥ पक्ष इति यावत् ॥२१॥ प्रसिद्धो धर्मी ॥२२॥ विकल्पसिद्धे तस्मिन् सत्तेतरे साध्ये[1] ॥२३॥ अस्ति सर्वज्ञो नास्ति खरविषाणम् ॥२४॥ प्रमाणोभयसिद्धे तु साध्यधर्मविशिष्टता ॥२५॥ अग्निमानयं देशः परिणामी शब्द इति यथा ॥२६॥ व्याप्तौ तु साध्यं धर्म एव ॥२७॥ अन्यथा तदघटनात् ॥२८॥ साध्यधर्माधारसन्देहापनोदाय गम्यमानस्यापि पक्षस्य वचनम् ॥२९॥ साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ॥३०॥ को वा त्रिधा हेतुमुक्त्वा समर्थयमानो न पक्षयति ॥३१॥ एतद्द्वयमेवानुमानाङ्गं नोदाहरणम् ॥३२॥ न हि तत्साध्यप्रतिपत्त्यङ्गं तत्र यथोक्तहेतोरेव व्यापारात् ॥३३॥ तदविनाभावनिश्चयार्थं वा विपक्षे बाधकादेव तत्सिद्धेः ॥३४॥ व्यक्तिरूपं च निदर्शनं सामान्येन तु व्याप्तिस्तत्रापि तद्विप्रतिपत्तावनवस्थानं स्याद्दृष्टान्तान्तरापेक्षणात् ॥३५॥ नापि

---

१ सत्ता च तदपेक्षयेतराऽसत्ता च ते स्तः । इति टीका ।

व्याप्तिस्मरणार्थं तथाविधहेतुप्रयोगादेव तत्स्मृतेः ॥३६॥ तत्परमभिधीय-
मानं साध्यधर्मिणि साध्यसाधने सन्देहयति ॥३७॥ कुतोऽन्यथोपनयनिगमने ॥३८॥
न च ते तदङ्गे साध्यधर्मिणि हेतुसाध्ययोर्वचनादेवासंशयात् ॥३९॥ समर्थनं
वा वरं हेतुरूपमनुमानावयवो वास्तु साध्ये तदुपयोगात् ॥४०॥ बालव्युत्पत्त्यर्थं
तत्त्रयोपगमे शास्त्र एवासौ न वादेऽनुपयोगात् ॥४१॥ दृष्टान्तो द्वेधान्वय-
व्यतिरेकभेदात् ॥४२॥ साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः ॥४३॥
साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः ॥४४॥ हेतोरुप-
संहार उपनयः ॥४५॥ प्रतिज्ञायास्तु निगमनम् ॥४६॥ तदनुमानं द्वेधा ॥४७॥
स्वार्थपरार्थभेदात् ॥४८॥ स्वार्थमुक्तलक्षणम् ॥४९॥ परार्थं तु तदर्थपरामर्शि-
वचनाज्जातम् ॥५०॥ तद्वचनमपि तद्धेतुत्वात् ॥५१॥ स हेतुर्द्वेधोपलब्ध्यनुप-
लब्धिभेदात् ॥५२॥ उपलब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्च ॥५३॥ अविरुद्धोप-
लब्धिर्विधौ षोढा व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदात् ॥५४॥ रसादेक-
सामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं हेतुर्यत्र सामर्थ्या-
प्रतिबन्धकारणान्तरावैकल्ये[1] ॥५५॥ न च पूर्वोत्तरचारिणोस्तादात्म्यं तदुत्पत्तिर्वा
कालव्यवधाने तदनुपलब्धेः ॥५६॥ भाव्यतीतयोर्मरणजाग्रद्बोधयोरपि नारि-
ष्टोद्बोधौ प्रति हेतुत्वम् ॥५७॥ तद्व्यापाराश्रितं हि तद्भावभावित्वम् ॥५८॥
सहचारिणोरपि परस्परपरिहारेण व्यवस्थानात् सहोत्पादाच्च ॥५९॥ परिणामी
शब्दः कृतकत्वात् य एवं स एवं दृष्टो यथा घटः कृतकश्चायं तस्मात्परिणामीति
यस्तु न परिणामी स न कृतको दृष्टो यथा बन्ध्यास्तनंधयः कृतकश्चायं
तस्मात्परिणामी ॥६०॥ अस्त्यत्र देहिनि बुद्धिः व्यापारादेः[2] ॥६१॥ अस्त्यत्र
छाया छत्रात् ॥६२॥ उदेष्यति शकटं कृत्तिकोदयात् ॥६३॥ उदगाद्भरणिः
प्राक्तत एव ॥६४॥ अस्त्यत्र मातुलिङ्गे रूपं रसात् ॥६५॥ विरुद्धतदुपलब्धिः
प्रतिषेधे तथा ॥६६॥ नास्त्यत्र शीतस्पर्श औष्ण्यात् ॥६७॥ नास्त्यत्र शीतस्पर्शो

---

[1] यत्र सामर्थ्याप्रतिबन्धःकारणान्तरावैकल्यञ्च निश्चीयते । इति टीका ।

[2] व्याहारादेः । इति पाठान्तरम् ।

धूमात् ॥६८॥ नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात् ॥६९॥ नोदेष्यति मुहूर्तान्ते शकटं रेवत्युदयात् ॥७०॥ नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् ॥७१॥ नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनात् ॥७२॥ अविरुद्धानुपलब्धिः प्रतिषेधे सप्तधा स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलम्भभेदात् ॥७३॥ नास्त्यत्र भूतले घटोऽनुपलब्धेः ॥७४॥ नास्त्यत्र शिंशपा वृक्षानुपलब्धेः ॥७५॥ नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः ॥७६॥ नास्त्यत्र धूमोऽनग्नेः ॥७७॥ न भविष्यति मुहूर्तान्ते शकटं कृत्तिकोदयानुपलब्धेः ॥७८॥ नोदगाद्भरणिर्मुहूर्तात् प्राक्त एव ॥७९॥ नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेः ॥८०॥ विरुद्धानुपलब्धिर्विधौ त्रेधा विरुद्धकार्यकारणस्वभावानुपलब्धिभेदात् ॥८१॥ यथास्मिन् प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धेः ॥८२॥ अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् ॥८३॥ अनेकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेः ॥८४॥ परम्परया संभवत्साधनमत्रैवान्तर्भावनीयम् ॥८५॥ अभूदत्र चक्रे शिवकः स्थासात् ॥८६॥ कार्यकार्यमविरुद्धकार्योपलब्धौ ॥८७॥ यथा नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात् कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथा ॥८८॥ व्युत्पन्नप्रयोगस्तु तथोपपत्त्यान्यथानुपपत्त्यैव वा ॥८९॥ अग्निमानयं देशस्तथैव धूमवत्त्वोपपत्तेर्धूमवत्त्वान्यथानुपपत्तेर्वा ॥९०॥ हेतुप्रयोगो हि यथा व्याप्तिग्रहणं विधीयते सा च तावन्मात्रेण व्युत्पन्नैरवधार्यते ॥९१॥ तावता च साध्यसिद्धिः ॥९२॥ तेन पक्षस्तदाधारसूचनायोक्तः ॥९३॥ आप्तवाक्यादिनिबन्धनमर्थज्ञानमागमः ॥९४॥ सहजयोग्यतासङ्केतवशाद्धि शब्दादयो वस्तुप्रतिपत्तिहेतवः ॥९५॥ यथा मेर्वादयः सन्ति ॥९६॥

इति परोक्षोद्देशः तृतीयः ॥३॥

---

सामान्यविशेषात्मा तदर्थो विषयः ॥१॥ अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात्पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्च ॥२॥

सामान्यं द्वेधा तिर्यगूर्द्धताभेदात् ॥ ३ ॥ सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत् ॥४॥ परापरविवर्तव्यापिद्रव्यमूर्द्धता मृदिव स्थासादिषु ॥५॥ विशेषश्च ॥६॥ पर्यायव्यतिरेकभेदात् ॥ ७ ॥ एकस्मिन्द्रव्ये क्रमभाविनः परिणामपर्याया आत्मनि हर्षविषादादिवत् ॥ ८ ॥ अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको गोमहिषादिवत् ॥९॥

इति प्रमाणस्य विषयोद्देशः चतुर्थः ॥४॥

---

अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलम् ॥१॥ प्रमाणादभिन्नं भिन्नं च ॥२॥ यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्त उपेक्षते चेति प्रतीतेः ॥३॥

इति प्रमाणस्य फलोद्देशः पञ्चमः ॥५॥

---

ततोऽन्यत् तदाभासम् ॥१॥ अस्वसंविदितगृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः ॥२॥ स्वविषयोपदर्शकत्वाभावात् ॥ ३ ॥ पुरुषान्तरपूर्वार्थ-गच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् ॥ ४ ॥ चक्षूरसयोर्द्रव्ये संयुक्तसमवायवच्च ॥ ५ ॥ अवैशद्ये प्रत्यक्षं तदाभासं बौद्धस्याकस्माद्धूमदर्शनाद्वह्निविज्ञानवत् ॥६॥ वैशद्येऽपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत् ॥७॥ अतस्मिंस्तदिति ज्ञानं स्मरणाभासं जिनदत्ते स देवदत्तो यथा ॥८॥ सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमलकवत् इत्यादि प्रत्यभिज्ञानाभासम् ॥९॥ असंबद्धे तज्ज्ञानं तर्काभासं यावांस्तत्पुत्रः स श्यामः ॥१०॥ इदमनुमानाभासम् ॥११॥ तत्रानिष्टादिः पक्षाभासः ॥१२॥ अनिष्टो मीमांसकस्यानित्यः शब्दः ॥१३॥ सिद्धः श्रावणः शब्दः ॥१४॥ बाधितः प्रतिज्ञानुमानागमलोकस्ववचनैः ॥१५॥ तत्र प्रत्यक्षबाधितो यथाऽनुष्णोऽग्निर्द्रव्यत्वाज्जलवत् ॥१६॥ अपरिणामी शब्दः कृतकत्वाद् घटवत् ॥१७॥ प्रेत्यासुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवत् ॥१८॥ शुचि नरशिरःकपालं प्राण्यंगत्वाच्छङ्खशुक्तिवत् ॥१९॥ माता मे वन्ध्या पुरुषसंयोगेऽप्यगर्भत्वात् प्रसिद्धवन्ध्यावत् ॥२०॥ हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिंचित्कराः ॥२१॥

असत्सत्तानिश्चयोऽसिद्धः ॥२२॥ अविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वात् ॥२३॥ [1]स्वरूपेणैवासिद्धत्वात् ॥२४॥ अविद्यमाननिश्चयो मुग्धबुद्धिं प्रति अग्निरत्र धूमात् ॥२५॥ तस्य बाष्पादिभावेन भूतसङ्घाते सन्देहात् ॥२६॥ सांख्यं प्रति परिणामी शब्दः कृतकत्वात् ॥२७॥ तेनाज्ञातत्वात् ॥२८॥ विपरीतनिश्चिताविनाभावो विरुद्धः अपरिणामी शब्दः कृतकत्वात् ॥२९॥ विपक्षेऽप्यविरुद्धवृत्तिरनैकान्तिकः ॥३०॥ निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वाद् घटवत् ॥३१॥ आकाशे नित्येऽप्यस्य निश्चयात् ॥३२॥ शङ्कितवृत्तिस्तु नास्ति सर्वज्ञो वक्तृत्वात् ॥३३॥ सर्वज्ञत्वेन वक्तृत्वाविरोधात् ॥३४॥ सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिञ्चित्करः ॥३५॥ सिद्धः श्रावणः शब्दः शब्दत्वात् ॥३६॥ किञ्चिदकरणात् ॥३७॥ यथानुष्णोऽग्निर्द्रव्यत्वात् इत्यादौ किञ्चित्कर्तुमशक्यत्वात् ॥३८॥ लक्षण एवासौ दोषो व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वात् ॥३९॥ दृष्टान्ताभासा अन्वये असिद्धसाध्यसाधनोभयाः ॥४०॥ अपौरुषेयः शब्दो मूर्त्तत्वादिन्द्रियसुखपरमाणुघटवत् ॥४१॥ विपरीतान्वयश्च यदपौरुषेयं तदमूर्त्तम् ॥४२॥ विद्युदादिनातिप्रसङ्गात् ॥४३॥ व्यतिरेके सिद्धतद्व्यतिरेकाः परमाण्विन्द्रियसुखाकाशवत् ॥४४॥ विपरीतव्यतिरेकश्च यन्नामूर्त्तं तन्नापौरुषेयम् ॥४५॥ बालप्रयोगाभासः पञ्चावयवेषु कियद्धीनता ॥४६॥ अग्निमानयं देशो धूमवत्त्वाद्यदित्थं तदित्थं यथा महानसम् ॥४७॥ धूमवांश्चायमिति वा ॥४८॥ तस्मादग्निमान् धूमवांश्चायम् ॥४९॥ स्पष्टतया प्रकृतप्रतिपत्तेरयोगात् ॥५०॥ रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् ॥५१॥ यथा नद्यास्तीरे मोदकराशयः सन्ति धावध्वं माणवकाः ॥५२॥ अङ्गुल्यग्रे हस्तियूथशतमास्ते इति च ॥५३॥ विसंवादात् ॥५४॥ प्रत्यक्षमेवैकं प्रमाणमित्यादिसंख्याभासम् ॥५५॥ लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिद्धेरतद्विषयत्वात् ॥५६॥ सौगतसांख्ययौगप्राभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावैरेकैकाधिकैर्व्याप्तिवत् ॥५७॥ अनु-

---

[1] स्वरूपेणासत्त्वात्। इति पाठान्तरम्।

मानादेस्तद्विषयत्वे प्रमाणान्तरत्वम् ॥५८॥ तर्कस्येव व्याप्तिगोचरत्वेऽप्रमाणान्तरत्वं अप्रमाणस्याव्यवस्थापकत्वात् ॥६०॥ विषयाभासः सामान्यं विशेषो द्वयं वा स्वतन्त्रम् ॥६१॥ तथाऽप्रतिभासनात्कार्याकरणाच्च ॥६२॥ समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात् ॥६३॥ परापेक्षणे परिणामित्वमन्यथा तदभावात् ॥६४॥ स्वयमसमर्थस्याकारकत्वात्पूर्ववत् ॥६५॥ फलाभासं प्रमाणादभिन्नं भिन्नमेव वा ॥६६॥ अभेदे तद्व्यवहारानुपपत्तेः ॥६७॥ व्यावृत्त्यापि न तत्कल्पना फलान्तराद्व्यावृत्त्या फलत्वप्रसङ्गात् ॥६८॥ प्रमाणान्तराद्व्यावृत्त्येवाप्रमाणत्वस्य ॥६९॥ तस्माद्वास्तवो भेदः ॥७०॥ भेदे त्वात्मान्तरवत्तदनुपपत्तेः ॥७१॥ समवायेऽतिप्रसङ्गः ॥७२॥ प्रमाणतदाभासौ दुष्टतयोद्भावितौ परिहृतापरिहृतदोषौ वादिनः साधनतदाभासौ प्रतिवादिनो दूषणभूषणे च ॥७३॥ सम्भवदन्यद्विचारणीयम् ॥७४॥

इति परीक्षामुखस्याभासोद्देशः षष्ठः ॥६॥

परीक्षामुखमादर्शं हेयोपादेयतत्त्वयोः ।
संविदे मादृशो बालः परीक्षादक्षवद्व्यधाम् ॥

इति श्रीमाणिक्यनन्दिविरचितानि परीक्षामुखसूत्राणि समाप्तानि ।
सू. सं. ॥२०७॥

# परीक्षामुखलघुवृत्तिः ।

ॐ नमः सिद्धेभ्यः ॥

नतामरशिरोरत्नप्रभाप्रोतनखत्विषे ।
नमो जिनाय दुर्वारमारवीरमदच्छिदे ॥ १ ॥
अकलङ्कवचोऽम्भोधेरुद्दध्रे येन धीमता ।
न्यायविद्यामृतं तस्मै नमो माणिक्यनन्दिने ॥ २ ॥
प्रभेन्दुवचनोदारचन्द्रिकाप्रसरे सति ।
मादृशाः क्व नु गण्यन्ते ज्योतिरिङ्गणसन्निभाः ॥ ३ ॥
तथापि तद्वचोऽपूर्वरचनारुचिरं सताम् ।
चेतोहरं भृतं यद्वन्नद्या नवघटे जलम् ॥ ४ ॥
वैजेयप्रियपुत्रस्य हीरपस्योपरोधतः ।
शान्तिषेणार्थमारब्धा परीक्षामुखपञ्जिका ॥ ५ ॥

श्रीमन्न्यायपारावारस्यामेयप्रमेयरत्नसारस्यावगाहनमव्युत्पन्नैः कर्तुं न पार्य्यते । इति तदवगाहनाय पोतप्रायमिदं प्रकरणमाचार्य्यः प्राह । तत्प्रकरणस्य च सम्बन्धादित्रयापरिज्ञाने सति प्रेक्षावतां प्रवृत्तिर्न स्यादिति तत्त्रयानुवादपुरःसरं वस्तुनिर्देशपरं प्रतिज्ञाश्लोकमाह ॥ ० ॥

इत्यस्यार्थः । अहं वक्ष्ये प्रतिपादयिष्ये । किं तत् । लक्ष्म लक्षणं । किंविशिष्टं लक्ष्म । सिद्धं पूर्वाचार्य्यप्रसिद्धत्वात् । पुनरपि कथम्भूतम् । अल्पमल्पग्रन्थवाच्यत्वात् । ग्रन्थतोऽल्पमर्थतस्तु महदित्यर्थः । कान् । लघीयसो विनेयानुद्दिश्य । लाघवं मतिकृतमिह गृह्यते । न परिमाणकृतं । नापि कालकृतं । तस्य प्रतिपाद्यत्वव्यभिचारात् । कयोस्तल्लक्ष्म । तयोः प्रमाणतदाभासयोः । कुतः । यतोऽर्थस्य परिच्छेद्यस्य संसिद्धिः संप्राप्तिर्ज्ञप्तिर्वा भवति । कस्मात् । प्रमाणात् । न केवलं प्रमाणादर्थसंसिद्धिर्भवति । विपर्य्ययो भवति । अर्थसंसिद्ध्यभावो भवति । कस्मात् । तदाभासात् । प्रमाणाभासात् । इति शब्दो हेत्वर्थे । इति हेतोः । अयमत्र समुदायार्थः । यतः कारणात् प्रमाणादर्थसंसिद्धिर्भवति । यस्माच्च तदाभासाद्विपर्य्ययो भवति । इति हेतोस्तयोः प्रमाणतदाभासयोः लक्ष्म लक्षणमहं वक्ष्ये इति ॥

ननु सम्बन्धाभिधेयशक्यानुष्ठानेष्टप्रयोजनवन्ति शास्त्राणि भवन्ति । तत्रास्य प्रकरणस्य यावदभिधेयं सम्बन्धो वा नाभिधीयते न तावदस्योपादेयत्वं भवितुमर्हति । एष वन्ध्यासुतो यातीत्यादिवाक्यवत् । दशदाडिमादिवाक्यवच्च । तथा शक्यानुष्ठानेष्टप्रयोजनमपि शास्त्रादाववश्यं वक्तव्यमेव । अशक्यानुष्ठानस्येष्टप्रयोजनस्य सर्वज्वरहरतक्षकचूडारत्नालङ्कारोपदेशस्येव प्रेक्षावद्भिरनादरणीयत्वात् । तथा शक्यानुष्ठानस्याप्यनिष्टप्रयोजनस्य विद्वद्भिरवधीरणात् । मातृविवाहादिप्रदर्शकवाक्यवदिति । सत्यं प्रमाणतदाभासपदोपादानादभिधेयमभिहितमेव । प्रमाणतदाभासयोरनेन प्रकरणेनाभिधानात् । सम्बन्धस्त्वार्थायातः प्रकरणतदभिधेययोर्वाच्यवाचकलक्षणः प्रतीयत एव । तथा प्रयोजनञ्चोक्तलक्षणमादिश्लोकेनैव

संलक्ष्यते । प्रयोजनं हि द्विधाऽभिद्यते साक्षात् परम्परयेति । तत्र साक्षात्प्रयोजनं वक्ष्ये इत्यनेनाभिधीयते । शास्त्रव्युत्पत्तेरेव विनेयैरन्वेषणात् । पारम्पर्य्येण तु प्रयोजनमर्थसंसिद्धिरित्यनेनोच्यते । शास्त्रव्युत्पत्त्यनन्तरभावित्वादर्थसंसिद्धेरिति ।

ननु निःशेषविघ्नोपशमनायेष्टदेवतानमस्कारः शास्त्रकृता कथं न कृतः इति न वाच्यम् । तस्य मनःकायाभ्यामपि सम्भवात् । अथवा वाचनिकोऽपि नमस्कारोऽनेनैवादिवाक्येनाभिहितो वेदितव्यः । केषाञ्चिद्वाक्यानामुभयार्थप्रतिपादनपरत्वेनापि दृश्यमानत्वात् । यथा श्वेतो धावतीत्युक्ते श्वा इतोऽधावति श्वेतगुणयुक्तो धावति इत्यर्थद्वयप्रतीतिः । तत्रादिवाक्यस्य नमस्कारपरताभिधीयते । अर्थस्य हेयोपादेयलक्षणस्य संसिद्धिर्ज्ञप्तिर्भवति । कस्मात् । प्रमाणात् । अनन्तचतुष्टयस्वरूपान्तरङ्गलक्षणा समवशरणादिस्वभावा बहिरङ्गलक्षणा च लक्ष्मीर्मा इत्युच्यते । अणनमाणः शब्दः । मा च आणश्च माणौ । प्रकृष्टौ माणौ यस्यासौ प्रमाणः । हरिहराद्यसम्भविविभूतियुक्तो दृष्टेष्टाविरुद्धवाक् च भगवानर्हन्नेवाभिधीयते । इत्यसाधारणगुणोपदर्शनमेव भगवतः संस्तवनमभिधीयते । तस्मात् प्रमाणादवधिभूतादर्थसंसिद्धिर्भवति । तदाभासाच्च हरिहरादेरर्थसंसिद्धिर्न भवति । इति हेतोः सर्वज्ञतदाभासयोः लक्ष्म लक्षणमहं वक्ष्ये । सामग्रीविशेषेत्यादिना ॥ ० ॥

अथेदानीमुपक्षिप्तप्रमाणतत्त्वे स्वरूपसंख्याविषयफललक्षणासु चतसृषु विप्रतिपत्तिषु मध्ये स्वरूपविप्रतिपत्तिनिराकरणार्थमाह ॥ १ ॥

प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत् प्रमाणम् । तस्य च ज्ञानमिति विशेषणमज्ञानरूपस्य सन्निकर्षादेः नैयायिकादिपरिकल्पितस्य प्रमाणत्वव्यवच्छेदार्थमुक्तम् । तथा ज्ञानस्यापि स्वसंवेदनेन्द्रियमनोयोगिप्रत्यक्षस्य निर्विकल्पकस्य प्रत्यक्षत्वेन प्रामाण्यं सौगतैः परिकल्पितं तन्निरासार्थं व्यवसायात्मकग्रहणम् । तथा बहिरर्थापह्नोतॄणां विज्ञानाद्वैतवादिनां पश्यतोहराणां शून्यैकान्तवादिनां च विपर्य्यासव्युदासार्थमर्थग्रहणम् । अस्य चापूर्वविशेषणं गृहीतग्राहिधारावाहिज्ञानस्य प्रमाणतापरिहारार्थमुक्तम् । तथा परोक्षज्ञानवादिनां मीमांसकानामस्वसंवेदनज्ञानवादिनां सांख्यानां ज्ञानान्तरप्रत्यक्षज्ञानवादिनां यौगानाञ्च मतमपाकर्तुं स्वपदोपादानमित्यव्याप्त्यतिव्याप्त्यसम्भवदोषपरिहारात् सुव्यवस्थितमेव प्रमाणलक्षणम् ॥ अस्य च प्रमाणस्य यथोक्तलक्षणत्वे साध्ये प्रमाणत्वादिति हेतुरत्रैव द्रष्टव्यः । प्रथमान्तस्यापि हेतुपरत्वेन निर्देशोपपत्तेः । प्रत्यक्षं विशदं ज्ञानमित्यादिवत् । तथाहि प्रमाणं स्वापूर्वार्थव्यवसायात्मकं ज्ञानं भवति प्रमाणत्वात् ।

यत्तु स्वापूर्वार्थव्यवसायात्मकं ज्ञानं न भवति न तत् प्रमाणं यथा संशयादिर्घटादिश्च । प्रमाणञ्च विवादापन्नम् । तस्मात् स्वापूर्वार्थव्यवसायात्मकं ज्ञानमेव भवतीति । न च प्रमाणत्वमसिद्धम् । सर्वप्रमाणस्वरूपवादिनां प्रमाणसामान्येऽपि विप्रतिपत्त्यभावात् । अन्यथा स्वेष्टानिष्टसाधनदूषणायोगात् ।

अथ धर्मिण एव हेतुत्वे प्रतिज्ञार्थैकदेशासिद्धो हेतुः स्यादिति चेन्न । विशेषं धर्मिणं कृत्वा सामान्यं हेतुं ब्रुवतां दोषाभावात् । एतेनापक्षधर्मत्वमपि प्रत्युक्तम् । सामान्यस्याशेषविशेषनिष्ठत्वात् । न च पक्षधर्मताबलेन हेतोर्गमकत्वम् अपित्वन्यथानुपपत्तिबलेनेति । सा चात्र नियमवती विपक्षे बाधकप्रमाणबलान्निश्चितैव । एतेन विरुद्धत्वमनैकान्तिकत्वञ्च निरस्तं बोद्धव्यम् । विरुद्धस्य व्यभिचारिणश्चाविनाभावनियमनिश्चयलक्षणत्वायोगादत्रा

भवत्येव साध्यसिद्धिरिति, केवलव्यतिरेकिणोऽपि हेतोर्गमकत्वात् । सात्मकं जीवच्छरीरं प्राणादिमत्त्वादित्यादिवत् ॥ १ ॥

अथेदानीं स्वोक्तप्रमाणलक्षणस्य ज्ञानमितिविशेषणं समर्थयमानः प्राह ॥ २ ॥

हितं सुखं तत्कारणञ्च । अहितं दुःखं तत्कारणञ्च । हितञ्चाहितञ्च हिताहिते तयोः प्राप्तिश्च परिहारश्च तत्र समर्थम् । हि शब्दो यस्मादर्थे । तेनायमर्थः संपादितो भवति । यस्माद्धिताहितप्राप्तिपरिहारसमर्थं प्रमाणं ततः तत्प्रमाणत्वेनाभ्युपगतं वस्तु ज्ञानमेव भवितुमर्हति । नाज्ञानरूपं सन्निकर्षादि । तथाच प्रयोगः । प्रमाणं ज्ञानमेव हिताहित-प्राप्तिपरिहारसमर्थत्वात् । यत्तु न ज्ञानं तन्न हिताहितप्राप्तिपरिहारसमर्थं यथा घटादि । हिताहितप्राप्तिपरिहारसमर्थञ्च विवादापन्नम् । तस्माज्ज्ञानमेव भवतीति । न चैतद-सिद्धम् । हितप्राप्तये अहितपरिहाराय च प्रमाणमन्वेषयन्ति प्रेक्षापूर्व्वकारिणो न व्यसनि-तया । सकलप्रमाणवादिभिरभिमतत्वात् ॥ २ ॥

अत्राह सौगतः । भवतु नाम सन्निकर्षादिव्यवच्छेदेन ज्ञानस्यैव प्रामाण्यं न तदस्माभिर्निषिध्यते । तत्तु व्यवसायात्मकमेवेत्यत्र न युक्तिमुत्पश्यामः । अनुमानस्यैव व्यवसायात्मनः प्रामाण्याभ्युपगमात् । प्रत्यक्षस्य तु निर्व्विकल्पकत्वेऽप्यविसंवादकत्वेन प्रामाण्योपपत्तेरिति । तत्राह ॥ ३ ॥

तत् प्रमाणत्वेनाभ्युपगतं वस्त्विति धर्म्मिनिर्द्देशः । व्यवसायात्मकमिति साध्यम् । समारोपविरुद्धत्वादिति हेतुः । अनुमानवदिति दृष्टान्त इति । अयमभिप्रायः । संशय-विपर्य्यासानध्यवसायस्वभावसमारोपविरोधिग्रहणलक्षणव्यवसायात्मकत्वे सत्येवाविसंवा-दित्वमुपपद्यते । अविसंवादत्वे च प्रमाणत्वमिति चतुर्व्विधस्यापि समक्षस्य प्रमाणत्व-मभ्युपगच्छता समारोपविरोधिग्रहणलक्षणं निश्चयात्मकमभ्युपगन्तव्यम् । ननु तथापि समारोपविरोधि-व्यवसायात्मकत्वयोः समानार्थत्वात् कथं साध्यसाधनभाव इति न मन्तव्यम् । ज्ञानस्वभावतया तयोरभेदेऽपि व्याप्यव्यापकत्वधर्म्माधारतया भेदोपपत्तेः । शिंशपात्ववृक्षत्ववत् ॥ ३ ॥

अथेदानीं सविशेषणमर्थग्रहणं समर्थयमानस्तदेव स्पष्टीकुर्व्वन्नाह ॥ ४ ॥

यः प्रमाणान्तरेण संशयादिव्यवच्छेदेनाध्यवसितः सोऽपूर्व्वार्थ इत्यर्थः । तेनेहाति ज्ञानविषयस्यावग्रहादिगृहीतत्वेऽपि न पूर्व्वार्थत्वम् । अवग्रहादिनेहादिविषयभूतावान्तर-विशेषनिश्चयाभावात् ॥ ४ ॥

अथोक्तप्रकार एवापूर्व्वार्थः किमन्योऽप्यस्तीत्याह ॥ ५ ॥

दृष्टोऽपि गृहीतोऽपि न केवलमनिश्चितस्त्वेत्यपिशब्दार्थः । तादृगपूर्व्वार्थो भवति । समारोपादिति हेतुः । एतदुक्तं भवति श्यामलिताकारतया यन्निर्णेतुं न शक्यते तदपि वस्त्वपूर्व्वमिति व्यपदिश्यते । प्रवृत्तसमारोपाव्यवच्छेदात् ॥ ५ ॥

ननु भवतु नामापूर्व्वार्थव्यवसायात्मकत्वं विज्ञानस्य स्वव्यवसायस्तु न विद्यत इत्यत्राह ॥ ६ ॥

स्वस्योन्मुखता स्वोन्मुखता तया स्वानुभवतया प्रतिभासनं स्वस्य व्यवसायः ॥ ६ ॥

अत्र दृष्टान्तमाह ॥ ७ ॥

तच्छब्देनार्थोऽभिधीयते । यथार्थोन्मुखतया प्रतिभासनमर्थव्यवसायस्तथा स्वोन्मुख-तया प्रतिभासनं स्वस्य व्यवसायो भवति ॥ ७ ॥

अत्रोल्लेखमाह ॥ ८ ॥

ननु ज्ञानमर्थमेवाध्यवस्यति न स्वात्मानमात्मानं फलं वेति केचित्। कर्त्तृकर्म्मणोरेव प्रतीतिरित्यपरे। कर्त्तृकर्म्मक्रियाणामेव प्रतीतिरित्यन्ये। तेषां मतमखिलमपि प्रतीतिबाधितमिति दर्शयन्नाह ॥ ९ ॥

ज्ञानविषयभूतं वस्तु कर्म्माभिधीयते तस्यैव ज्ञप्तिक्रियया व्याप्यत्वात्। तस्यैव तद्वत् कर्त्तात्मा करणं प्रमाणं क्रिया प्रमितिः। कर्त्ता च करणञ्च क्रिया च तासां प्रतीतिस्तथा इति हेतौ। का प्रागुक्तानुभवोल्लेखे यथाक्रमं तत्प्रतीतिर्द्रष्टव्या ॥ ९ ॥

ननु शब्दपरामर्शसचिवेयं प्रतीतिर्न वस्तुतत्त्वबलोपजातेत्यत्राह ॥ १० ॥

यथा घटादिशब्दानुच्चारणेऽपि घटाद्यनुभवस्तथाहमहमिकया योऽयमन्तर्मुखाकारतयावभासः स शब्दानुच्चारणेऽपि स्वयमनुभूयत इत्यर्थः ॥ १० ॥

अमुमेवार्थमुपपत्तिपूर्व्वकं परं प्रति सोल्लुण्ठमाचष्टे ॥ ११ ॥

को वा लौकिकः परीक्षको वा। तेन ज्ञानेन प्रतिभासितुं शीलं यस्य स तथोक्तस्तं प्रत्यक्षविषयमिच्छन्। विषयिधर्म्मस्य विषये उपचारात्। तदेव ज्ञानमेव तथा प्रत्यक्षत्वेन नेच्छेत्। अपि त्विच्छेदेव। अन्यथा प्रामाणिकत्वप्रसङ्गः स्यादित्यर्थः ॥ ११ ॥

अत्रोदाहरणमाह ॥ १२ ॥

इदमत्र तात्पर्य्यम्। ज्ञानं स्वावभासने स्वातिरिक्तसजातीयार्थान्तरानपेक्षं प्रत्यक्षार्थगुणत्वे सति अदृष्टानुयायि करणत्वात्। प्रदीपभासुराकारवत् ॥ १२ ॥

अथ भवतु नाम उक्तलक्षणलक्षितं प्रमाणं तथापि तत्प्रामाण्यं स्वतः परतो वा। न तावत्स्वतः। अविप्रतिपत्तिप्रसङ्गात्। नापि परतोऽनवस्थाप्रसङ्गात्। इति मतद्वयमाशङ्क्य तन्निराकरणेन स्वमतमवस्थापयन्नाह ॥ १३ ॥

सोपस्काराणि हि वाक्यानि भवन्ति। तत इदं प्रतिपत्तव्यं अभ्यासदशायां स्वतोऽनभ्यासदशायाञ्च परत इति। तेन प्रागुक्तैकान्तद्वयनिरासः। न चानभ्यासदशायां परतः। प्रामाण्येऽप्यनवस्था समाना। ज्ञानान्तरस्याभ्यस्तविषयस्य स्वतः प्रमाणभूतस्याङ्गीकरणात्। अथवा प्रामाण्यमुत्पत्तौ परत एव विशिष्टकारणप्रभवत्वात् विशिष्टकार्य्यस्येति विषयपरिच्छित्तिलक्षणे वा स्वकार्य्ये अभ्यासेतरदशापेक्षया क्वचित्स्वतः परतश्चेति निश्चीयते ॥ १३ ॥

ननु उत्पत्तौ विज्ञानकारणातिरिक्तकारणान्तरसव्यपेक्षत्वमसिद्धं प्रामाण्यस्य तदितरस्येवाभावात्। गुणाख्यमस्तीति वाङ्मात्रम्। विधिमुखेन कार्य्यमुखेन वा गुणानामप्रतीतेः। नाप्यप्रामाण्यं स्वतएव प्रामाण्यन्तु परत एवेति विपर्य्ययः शक्यते कल्पयितुम्। अन्वयव्यतिरेकाभ्यां हि त्रिरूपाल्लिङ्गादेव केवलात् प्रामाण्यमुत्पद्यमानं दृष्टम्। प्रत्यक्षादिष्वपि तथैव प्रतिपत्तव्यं नान्यथेति ततएवाप्तोक्तत्वगुणसद्भावेऽपि न तत् कृतमागमस्य प्रामाण्यम्। तत्र हि गुणेभ्यो दोषाणामभावस्तदभावाच्च संशयविपर्य्यासलक्षणाप्रामाण्यद्वयासत्त्वेऽपि प्रामाण्यमौत्सर्गिकमनपोहितमास्त एव इति। ततः स्थितं प्रामाण्यमुत्पत्तौ न सामग्र्यन्तरसापेक्षमिति। नापि विषयपरिच्छित्तिलक्षणे स्वकार्य्ये स्वग्रहणसापेक्षमगृहीतप्रामाण्यादेव ज्ञानाद्विषयपरिच्छित्तिलक्षणकार्य्यदर्शनात्।

ननु न परिच्छित्तिमात्रं प्रमाणकार्य्यं तस्य मिथ्याज्ञानेऽपि सद्भावात्। परिच्छित्तिविशेषन्तु अगृहीतप्रामाण्यं विज्ञानं जनयतीति तदपि बालविलसितम्। न हि प्रामाण्य-

ग्रहणोत्तरकालमुत्पत्तेरवस्थातः परिच्छित्तेर्विशेषोऽवभासते । गृहीतप्रामाण्यादपि विज्ञाना-न्निर्विशेषविषयपरिच्छेदोपलब्धेः ।

ननु परिच्छित्तिमात्रस्य शुक्तिकायां रजतज्ञानेऽपि सद्भावात्तस्यापि प्रमाणकार्य्यत्व-प्रसङ्गइति चेत् भवेदेवं यद्यर्थान्यथात्वप्रत्ययस्य हेतूत्थदोषज्ञानाभ्यां तन्नापोद्येत । तस्माद् यत्र कारणदोषज्ञानं बाधकप्रत्ययो वा नोदेति तत्र स्वतएव प्रामाण्यमिति । न चैव-मप्रामाण्येऽप्याशङ्कनीयं तस्य विज्ञानकारणातिरिक्तदोषस्वभावसामग्रीसव्यपेक्षतयोत्पत्तेः । निवृत्तिलक्षणे च स्वकार्य्ये स्वग्रहणसापेक्षत्वात् । तद्धि यावन्न ज्ञातं न तावत् स्वविषयात् पुरुषं निवर्त्तयतीति ॥

तदेतत् सर्व्वमनल्पतमोविलसितम् । तथाहि न तावत् प्रामाण्यस्योत्पत्तौ सामग्र्य-न्तरापेक्षत्वमसिद्धमाप्तप्रणीतत्वलक्षणगुणसन्निधाने सत्येवाप्तप्रणीतवचनेषु प्रामाण्यदर्शनात् । यद्भावाभावाभ्यां यस्योत्पत्त्यनुत्पत्ती तत्तत्कारणकमिति लोकेऽपि सुप्रसिद्धत्वात् । यदुक्तम् । विधिमुखेन कार्य्यमुखेन वा गुणानामप्रतीतिरिति । तत्र तावदाप्तप्रणीतशब्देन प्रतीति र्गुणानामित्ययुक्तं आप्तप्रणीतत्वहानिप्रसङ्गात् ।

अथ चक्षुरादौ गुणानामप्रतीतिरित्युच्यते तदप्ययुक्तं नैर्मल्यादिगुणानामबलाबालादि-भिरप्युपलब्धेः ।

अथ नैर्मल्यं स्वरूपमेव न गुणस्तर्हि चेतरविनाभाववैकल्यमपि स्वरूपविकलतैव न दोषइति समानम् ।

अथ तद्वैकल्यमेव दोषस्तर्हि लिङ्गस्य चक्षुरादेर्वा तत्स्वरूपसाकल्यमेव गुणः कथं न भवेत् । आप्तोक्तेऽपि शब्दे मोहादिलक्षणस्य दोषस्याभावमेव यथार्थज्ञानादिलक्षणगुण-सद्भावमभ्युपगच्छन्नन्यत्र तथा नेच्छतीति कथमनुन्मत्तः ।

अथोक्तमेव शब्दे गुणाः सन्तोऽपि न प्रामाण्योत्पत्तौ व्याप्रियन्ते । किन्तु दोषाभाव एवेति सत्यमुक्तं किन्तु न युक्तमेतत् । प्रतिज्ञामात्रेण साध्यसिद्धेरयोगात् । न हि गुणेभ्यो दोषाणामभाव इत्यत्र किञ्चिन्निबन्धनमुत्पश्यामोऽन्यत्र महामोहात् ।

अथानुमानेऽपि त्रिरूपलिङ्गमात्रजनितप्रामाण्योपलब्धिरेव तत्र हेतुरितिचेन्न । उक्तोत्तरत्वात् । तत्र हि त्रैरूप्यमेव गुणो यथा तद्वैकल्यं दोष इति नासम्मतो हेतुरपि चाप्रामाण्येऽप्येवं वक्तुं शक्यतएव । तत्र हि दोषेभ्यो गुणानामभावस्तदभावाच्च प्रामाण्या-सत्त्वे अप्रामाण्यमौत्सर्गिकमास्ते इत्यप्रामाण्यं स्वतएवेति तस्य भिन्नकारणप्रभवत्व-वर्णनमुन्मत्तभाषितमेव स्यात् ।

किञ्च गुणेभ्यो दोषाणामभावइत्यभिदधता गुणेभ्यो गुणएवेत्यभिहितं स्यात् । भावा-न्तरस्वभावत्वादभावस्य । ततोऽप्रामाण्यासत्त्वं प्रामाण्यमेवेति । नैतावता परपक्षप्रतिक्षेपः । अविरोधकत्वात् । तथानुमानतोपि गुणाः प्रतीयन्तएव । तथाहि प्रामाण्यं विज्ञानकारणा-तिरिक्तकारणप्रभवं विज्ञानान्यत्वे सति कार्य्यत्वात् अप्रामाण्यवत् । तथा प्रमाणप्रामाण्ये भिन्नकारणजन्ये भिन्नकार्य्यत्वात् घटदुःखवदिति च । ततः स्थितं प्रामाण्यमुत्पत्तौ परापेक्ष-मिति । तथा विषयपरिच्छित्तिलक्षणे प्रवृत्तिलक्षणे वा स्वकार्य्ये स्वग्रहणं नापेक्षत इति नैकान्तः । क्वचिदभ्यस्तविषयएव परानपेक्षत्वव्यवस्थानात् । अनभ्यस्ते तु जलमरुमरीचिका-साधारणप्रदेशे जलज्ञानं परापेक्षमेव सत्यमिदं जलं विशिष्टाकारधारित्वात् । घटचेटिकापे-टकदर्दुरशरावसरोजगन्धवत्त्वाच्च परिदृष्टजलवदित्यनुमानज्ञानादर्थक्रियाज्ञानाच्च स्वतःसिद्ध-

प्रामाण्यात् प्राचीनज्ञानस्य यथार्थत्वमाकलय्यमाकलय्यत एव । यदप्यभिहितं प्रामाण्यग्रहणोत्तरमुत्तरावस्थातः परिच्छित्तिविशेषो नावभासत इति तत्र यद्यभ्यस्तविषये नावभासत इत्युच्यते तदा तदिष्यत एव । तत्र प्रथममेव निःसंशयं विषयपरिच्छित्तिविशेषाभ्युपगमात् । अनभ्यस्तविषये तु तद्ग्रहणोत्तरकालमस्त्येव विषयावधारणस्वभावपरिच्छित्तिविशेषः पूर्वं प्रमाणाप्रमाणसाधारण्या एव परिच्छित्तेरुत्पत्तेः ।

ननु प्रामाण्यपरिच्छित्त्योरभेदात् कथं पौर्वापर्यमिति । नैवं न हि सर्वापरिच्छित्तिः प्रामाण्यात्मिका । प्रामाण्यन्तु परिच्छित्त्यात्मकमेवेति न दोषः ।

यदप्युक्तम् । बाधककारणदोषज्ञानाभ्यां प्रामाण्यमपोह्यत इति । तदपि फल्गुभाषितमेव अप्रामाण्येऽपि तथा भाषितुं शक्यत्वात् । तथाहि । प्रथममप्रमाणमेव ज्ञानमुत्पद्यते पश्चादबाधबोधगुणज्ञानोत्तरकालं तदपोह्यत इति । तस्मात् प्रामाण्यमप्रामाण्यं वा स्वकार्ये क्वचिदभ्यासानभ्यासापेक्षया स्वतः परतश्चेति निर्णेतव्यमिति ॥

देवस्य सम्मतमपास्तसमस्तदोषं
वीक्ष्य प्रपञ्चरुचिरं रचितं समस्य ।
माणिक्यनन्दिविभुना शिशुबोधहेतोः
मानस्वरूपमधुना स्फुटमभ्यधायि ॥

इति परीक्षामुखलघुवृत्तौ प्रामाण्यस्वरूपोद्देशः समाप्तः ॥ ० ॥

---

अथ प्रामाण्यस्वरूपविप्रतिपत्तिं निरस्येदानीं संख्याविप्रतिपत्तिं प्रतिक्षिपन् सकलप्रमाणभेदसन्दर्भसंग्रहपरं प्रमाणेयत्ताप्रतिपादकं वाक्यमाह ॥ १ ॥

तच्छब्देन प्रमाणं परामृश्यते । तत्प्रमाणं स्वरूपेणावगतं द्वेधा द्विप्रकारमेव । सकलप्रमाणभेदानामत्रैवान्तर्भावात् ॥ १ ॥

तद्द्वित्वमध्यक्षानुमानप्रकारेणापि सम्भवतीति । तदाशङ्कानिराकरणार्थं सकलप्रमाणभेदसंग्रहशालिनीं संख्यां प्रव्यक्तीकरोति ॥ २ ॥

प्रत्यक्षं वक्ष्यमाणलक्षणं इतरत् परोक्षं ताभ्यां भेदात् प्रमाणस्येति शेषः । नहि परपरिकल्पितैकद्वित्रिचतुःपञ्चषट्प्रमाणसंख्यानियमे निखिलप्रमाणभेदानामन्तर्भावविभावना शक्या कर्त्तुम् । तथाहि प्रत्यक्षैकप्रमाणवादिनः चार्वाकस्य नाध्यक्षे लैङ्गिकस्यान्तर्भावो युक्तः तस्य तद्विलक्षणत्वात् सामग्रीस्वरूपभेदात् ।

अथ नाप्रत्यक्षं प्रमाणमस्ति विसंवादसंभवात् । निश्चिताविनाभावाल्लिङ्गात् लिङ्गिनि ज्ञानमनुमानमित्यानुमानिकशासनम् । तत्र च स्वभावलिङ्गस्य बहुलमन्यथापि भावो दृश्यते । तथाहि कषायरसोपेतानामामलकानामेतद्देशकालसम्बन्धिनां दर्शनेऽपि देशान्तरे कालान्तरे द्रव्यान्तरसम्बन्धे चान्यथापि दर्शनात् । स्वभावहेतुर्व्यभिचार्येव लताचूतवत् । लताशिंशपादिसंभावनाच्च । तथा कार्यलिङ्गमपि गोपालघटिकादौ धूमस्य शक्रमूर्द्धि चान्यथापि भावात् पावकव्यभिचार्येव । ततः प्रत्यक्षमेवैकं प्रमाणमस्यैवाविसंवादकत्वादिति ।

तदेतद्बालविलसितमिवाभाति. उपपत्तिशून्यत्वात् । तथाहि किमप्रत्यक्षस्योत्पादककारणाभावादालम्बनाभावाद्वा प्रामाण्यं निषिध्यते । तत्र न तावत् प्राक्तनः पक्षः । तदु-

त्वादस्य सुनिश्चितान्यथानुपपत्तिनियतनिश्चयलक्षणस्य साधनस्य सद्भावात्। नो खल्वप्युरीचीनः पक्षः तदालम्बनस्य पावकादेः सकलविचारचतुरचेतसि संवेदने प्रतीयमानत्वात्।

यदपि स्वभावहेतोर्व्यभिचारसम्भावनमुक्तं तदप्यनुचितमेव। स्वभावमात्रस्याहेतुत्वात्। व्याप्यरूपस्यैव स्वभावस्य व्यापकं प्रति गमकत्वाभ्युपगमात्। न च व्याप्यस्य व्यापकव्यभिचारित्वम्। व्याप्यत्वविरोधप्रसङ्गात्। किञ्चैवं वादिनो नाध्यक्षं प्रमाणं व्यवतिष्ठते। तत्राप्यविसंवादस्यागौणत्वस्य च प्रमित्याविनाभावित्वेन निश्चेतुमशक्यत्वात्।

यच्च कार्यहेतोरप्यन्यथापि संभावनं तदप्यशिक्षितलक्षितम्। सुविवेचितस्य कार्यस्य कारणाव्यभिचारित्वात्। यादृशो हि धूमो ज्वलनकार्यो भूधरनितम्बादावतिबहलधवलतया प्रसर्पन्नुपलभ्यते। न तादृशो गोपालघटिकादाविति।

यदप्युक्तम्। शक्रमूर्द्धनि धूमस्यान्यथापि भाव इति। तत्र किमयं शक्रमूर्द्धा अग्निस्वभावोऽन्यथा वा। यद्यग्निस्वभावस्तदाग्निरेवेति। कथं तदुद्भूतधूमस्यान्यथाभावः शक्यते कल्पयितुम्। अथानग्निस्वभावस्तदा तदुद्भवो धूम एव न भवतीति कथं तत्र तस्य तद्व्यभिचारित्वमिति। तथाचोक्तम्—

अग्निस्वभावः शक्रस्य मूर्द्धा चेदग्निरेव सः।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेदिति॥

किञ्च प्रत्यक्षं प्रमाणमिति कथमिदं परं प्रतिपादयेत्। परस्य प्रत्यक्षेण ग्रहीतुमशक्यत्वात्। व्याहारादिकार्यप्रदर्शनात् तं प्रतिपद्येतेति चेत् आयातं तर्हि कार्यात्कारणानुमानम्। अथ लोकव्यवहारापेक्षयेष्यत एवानुमानमपि। परलोकादावेवानभ्युपगमात् तदभावादिति। कथं तदभावोऽनुपलब्धेरिति चेत् तदनुपलब्धिलिङ्गजनितमनुमानमपरमापतितमिति। प्रत्यक्षप्रामाण्यमपि स्वभावहेतुजातानुमितिमन्तरेण नोपपत्तिमियर्तीति प्रागेवोक्तमित्युपरम्यते। तदप्युक्तं धर्मकीर्त्तिना—

प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित्॥ इति।

ततः प्रत्यक्षमनुमानमिति प्रमाणद्वयमेवेति सौगतः। सोऽपि न युक्तवादी। स्मृतेरविसंवादिन्यास्तृतीयायाः प्रमाणभूतायाः सद्भावात्। न च तस्या विसंवादादप्रामाण्यम्। दत्तग्रहादिविलोपापत्तेः।

अथानुभूयमानस्य विषयस्याभावात् स्मृतेरप्रामाण्यं, न। तथाप्यनुभूतेनार्थेन सावलम्बनत्वोपपत्तेः। अन्यथा प्रत्यक्षस्याप्यनुभूतार्थविषयत्वादप्रामाण्यमनिवार्यं स्यात्। स्वविषयावभासनं स्मरणेऽप्यविशिष्टमिति।

किञ्च स्मृतेरप्रामाण्येऽनुमानवार्त्तापि दुर्लभा। तया व्याप्तेरविषयीकरणे तदुत्थानायोगादिति। तत इदं वक्तव्यम्। स्मृतिः प्रमाणं अनुमानप्रामाण्यान्यथानुपपत्तेरिति। सैव प्रत्यक्षानुमानस्वरूपतया प्रमाणस्य द्वित्वसंख्यानियमं विघटयतीति किं नश्चिन्तया। तथा प्रत्यभिज्ञानमपि सौगतीयप्रमाणसंख्यां विघटयत्येव। तस्यापि प्रत्यक्षानुमानयोरनन्तर्भावात्।

ननु तदिति स्मरणमिदमिति प्रत्यक्षमिति ज्ञानद्वयमेव। न ताभ्यां विभिन्नं प्रत्यभिज्ञानाख्यं वयं प्रतिपद्यमानं प्रमाणान्तरमुपलभामहे। ततः कथं तेन प्रमाणसंख्याविघटनमिति तदप्यघटितमेव। यतः स्मरणप्रत्यक्षाभ्यां प्रत्यभिज्ञानविषयस्यार्थस्य ग्रहीतुमशक्य-

त्वात्। पूर्वोत्तरविवर्त्तवर्त्त्येकद्रव्यं हि प्रत्यभिज्ञानविषयः। न च तत् स्मरणेनोपलभ्यते तस्यानुभूतिविषयत्वात्। नापि प्रत्यक्षेण तस्य वर्त्तमानविवर्त्तवर्त्तित्वात्।

यदप्युक्तम्। ताभ्यां भिन्नमन्यज्ज्ञानं नास्तीति तदप्ययुक्तम्। अभेदपरामर्शरूपतया भिन्नस्यैवावभासनात्। न च तयोरन्यतरस्य वा भेदपरामर्शात्मकत्वमस्ति विभिन्नविषयत्वात्। न चैतत् प्रत्यक्षेऽन्तर्भवत्यनुमाने वा तयोः पुरोऽवस्थितार्थविषयत्वेनाविनाभूतलिङ्गसम्भावितार्थविषयत्वेन च पूर्वापरविकारव्याप्येकत्वाविषयत्वात्। नापि स्मरणेनापि तदेकत्वस्याविषयीकरणात्।

अथ संस्कारस्मरणसहकृतमिन्द्रियमेव प्रत्यभिज्ञानं जनयतीतीन्द्रियजत्वादध्यक्षमेवेति न प्रमाणान्तरमित्यपरः। सोऽप्यतिबालिश एव स्वविषयाभिमुखेन प्रवर्त्तमानस्येन्द्रियस्य सहकारिशतसमवधानेऽपि विषयान्तरप्रवृत्तिलक्षणातिशयायोगात्। विषयान्तरञ्चातीतसाम्प्रतिकावस्थाव्याप्येकद्रव्यमिन्द्रियाणां रूपादिगोचरचारित्वेन चरितार्थत्वाच्च। नाप्यदृष्टसहकारिसव्यपेक्षमिन्द्रियमेकत्वविषयमुक्तदोषादेव।

किञ्चादृष्टसंस्कारादिसव्यपेक्षादेवात्मनः तद्विज्ञानमिति किं न कल्प्यते। दृश्यते हि। स्मरणसहकृतचाण्डालिकादिविद्यासंस्कृतादात्मनो विशिष्टज्ञानोत्पत्तिरिति।

नन्वञ्जनादिसंस्कृतमपि चक्षुः सातिशयमुपलभ्यत इति चेत् न। तस्य स्वार्थानतिक्रमेणैवातिशयोपलब्धेः न विषयान्तरग्रहणलक्षणातिशयस्य। तथाचोक्तम् —

यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवृत्तितः॥

इति। नन्वस्य वार्त्तिकस्य सर्वज्ञप्रतिषेधपरत्वात् विषमो दृष्टान्त इति चेत् न। इन्द्रियाणां विषयान्तरप्रवृत्तावतिशयाभावमात्रे सादृश्यात् दृष्टान्तत्वोपपत्तेः। नहि सर्वो दृष्टान्तधर्मो दार्ष्टान्तिके भवितुमर्हति। अन्यथा दृष्टान्त एव न स्यादिति। ततः स्थितं प्रत्यक्षानुमानाभ्यामर्थान्तरं प्रत्यभिज्ञानं सामग्रीस्वरूपभेदादिति। न चैतदप्रमाणम्। ततोऽर्थं परिच्छिद्य प्रवर्त्तमानस्यार्थक्रियायामविसंवादात् प्रत्यक्षवदिति। न चैकत्वापलापे बन्धमोक्षादिव्यवस्था। एकत्वाभावे बद्धस्यैव मोक्तृदेर्गृहीतसम्बन्धस्यैव लिङ्गस्यादर्शनादनुमानस्य च व्यवस्थायोगादिति। न चास्य विषये बाधकप्रमाणसद्भावादप्रामाण्यं तद्विषये प्रत्यक्षस्य लैङ्गिकस्य चाप्रवृत्तेः। प्रवृत्तौ वा प्रत्युत साधकत्वमेव न बाधकत्वमित्यलमतिप्रसङ्गेन॥ तथा सौगतस्य प्रमाणसंख्याविरोधिविध्वस्तबाधं तर्काख्यमुपढौकत एव। न चैतत्प्रत्यक्षे अन्तर्भवति। साध्यसाधनयोर्व्याप्यव्यापकभावस्य साकल्येन प्रत्यक्षाविषयत्वात्। न हि तदियतो व्यापारान् कर्त्तुं शक्नोति। अविचारकत्वात् सन्निहितविषयत्वाच्च। नाप्यनुमाने तस्यापि देशादिविषयविशिष्टत्वेन व्याप्त्यविषयत्वात्। तद्विषयत्वे वा प्रकृतानुमानान्तरविकल्पद्वयानतिक्रमात्। तत्र प्रकृतानुमानेन व्याप्तिप्रतिपत्तावितरेतराश्रयत्वप्रसङ्गः। व्याप्तौ हि प्रतिपन्नायाम् अनुमानमात्मानमासादयति। तदात्मलाभे च व्याप्तिप्रतिपत्तिरिति। अनुमानान्तरेणाविनाभावप्रतिपत्तावनवस्थावसूरपरम्पराचर्मूं चञ्चमीति।

नानुमानगम्या व्याप्तिः। नापि सांख्यादिपरिकल्पितैरागमोपमानार्थापत्त्यभावैः साकल्येनाविनाभावावगतिः। तेषां समयसंगृहीतसादृश्यान्यथानन्यथाभूताभावविषयत्वेन व्याप्त्यविषयत्वात्। परैस्तथानभ्युपगमाच्च।

अथ प्रत्यक्षदृष्टभाविविकल्पात् साकल्येन साध्यसाधनभावप्रतिपत्तेर्न प्रमाणान्तरं तदर्थं

द्वयमित्यपरः । सोऽपि न युक्तवादी । विकल्पस्याध्यक्षगृहीतविषयस्य तदगृहीतविषयस्य वा तद्व्याप्यव्यापकत्वमाद्ये पक्षे दर्शनस्येव तदनन्तरभाविनिर्णयस्यापि नियतविषयत्वेन व्याप्त्यगोचरत्वात् । द्वितीयपक्षेऽपि विकल्पद्वयमुपढौकत एव । तद्विकल्पज्ञानं प्रमाणमन्यथा वेति । प्रथमपक्षे प्रमाणान्तरमनुमन्तव्यं प्रमाणद्वयेऽनन्तर्भावात् । उत्तरपक्षे तु न ततोऽनुमानव्यवस्था । न हि व्याप्तिज्ञानस्याप्रामाण्ये तत्पूर्व्वकमनुमानं प्रमाणमाक्रन्दति । संदिग्धादिलिङ्गादप्युत्पद्यमानस्य प्रामाण्यप्रसङ्गात् । ततो व्याप्तिज्ञानं सविकल्पकमविसंवादकञ्च प्रमाणं प्रमाणद्वयादन्यदभ्युपगम्यमिति न सौगताभिमतप्रमाणसंख्यानियमः । एतेनानुपलम्भात् कारणव्यापकानुपलम्भाच्च कारणव्याप्यव्यापकभावसंवित्तिरिति वदन्नपि प्रत्युक्तः । अनुपलम्भस्य प्रत्यक्षविशेषत्वेन कारणाद्यनुपलम्भस्य च लिङ्गत्वेन तज्जनितस्यानुमानत्वात् । प्रत्यक्षानुमानाभ्यां व्याप्तिग्रहणपक्षोपक्षिप्तदोषानुषङ्गात् ।

एतेन प्रत्यक्षफलेनोहापोहविकल्पज्ञानेन व्याप्तिप्रतिपत्तिरित्यप्यपास्तम् । प्रत्यक्षफलस्यापि प्रत्यक्षानुमानयोरन्यतरत्वे व्याप्तेरविषयीकरणात् । तदन्यत्वे च प्रमाणान्तरत्वमनिवार्य्यमिति । अथ व्याप्तिविकल्पस्य फलत्वान्न प्रामाण्यमिति न युक्तम् । फलस्यानुमानलक्षणफलहेतुतया प्रमाणत्वाविरोधित्वात् । यथा सन्निकर्षफलस्यापि विशेषणज्ञानस्य विशेष्यज्ञानलक्षणफलापेक्षया प्रमाणत्वमिति न वैशेषिकाभ्युपगतोहापोहविकल्पः प्रमाणान्तरत्वमतिवर्त्तते । एतेन त्रि-चतुः-पञ्च-षट्प्रमाणवादिनोऽपि सांख्याक्षपादप्रभाकरजैमिनयः स्वप्रमाणसंख्या न व्यवस्थापयितुं क्षमा इति प्रतिपादितमवगन्तव्यमुक्तन्यायेन स्मृतिप्रत्यभिज्ञानतर्काणां तदभ्युपगतप्रमाणसंख्यापरिपन्थित्वादिति । प्रत्यक्षेतरभेदात् द्वे एव प्रमाणे इति स्थितम् ॥ २ ॥

अथ प्रमाणभेदस्य स्वरूपं निरूपयितुमाह ॥ ३ ॥

ज्ञानमिति वर्त्तते । प्रत्यक्षमिति धर्म्मिनिर्द्देशः । विशदज्ञानात्मकं साध्यम् । प्रत्यक्षत्वादिति हेतुः । तथाहि प्रत्यक्षं विशदज्ञानात्मकमेव प्रत्यक्षत्वात् । यन्न विशदज्ञानात्मकं तन्न प्रत्यक्षं यथा परोक्षम् । प्रत्यक्षञ्च विवादापन्नम् । तस्माद्विशदज्ञानात्मकमिति प्रतिज्ञार्थैकदेशासिद्धो हेतुरिति चेत् । का पुनः प्रतिज्ञा तदेकदेशो वा । धर्म्मिधर्म्मसमुदायः प्रतिज्ञा । तदेकदेशो धर्म्मो धर्म्मी वा । हेतुः प्रतिज्ञार्थैकदेशासिद्ध इति चेन्न । धर्म्मिणो हेतुत्वे असिद्धत्वायोगात् । धर्म्मिणो हेतुत्वे अनन्वयदोष इति चेन्न । विशेषस्य धर्म्मित्वात् । सामान्यस्य च हेतुत्वात् । तस्य च विशेषेष्वनुगमो विशेषनिष्ठत्वात् सामान्यस्य ।

अथ साध्यधर्म्मस्य हेतुत्वे प्रतिज्ञार्थैकदेशासिद्धत्वमिति । तदप्यसम्मतम् । साध्यस्य स्वरूपेणैवासिद्धत्वात् । न प्रतिज्ञार्थैकदेशासिद्धत्वेन तस्यासिद्धत्वम् । धर्म्मिणा व्यभिचारात् । सपक्षे वृत्त्यभावाद्धेतोरनन्वय इत्यप्यसत् । सर्व्वभावानां क्षणभङ्गसङ्गमेवाङ्गशृङ्गारं अङ्गीकुर्व्वतां तथागतानां सत्त्वादिहेतूनां अनुदयप्रसङ्गात् । विपक्षे बाधकप्रमाणभावात् पक्षव्यापकत्वाच्च अनन्वयवत्त्वं प्रकृतेऽपि समानम् ॥ ३ ॥

इदानीं स्वोक्तमेव विशदत्वं व्याचष्टे ॥ ४ ॥

एकस्याः प्रतीतेरन्या प्रतीतिः प्रतीत्यन्तरम् । तेनाव्यवधानं तेन प्रतिभासनं वैशद्यम् । यद्यप्यवायस्यावग्रहेहाप्रतीतिभ्यां व्यवधानं तथापि न परोक्षत्वं विषयविषयिणोर्भेदेनाप्रतिपत्तेः । यत्र विषयविषयिणोर्भेदे सति व्यवधानं तत्र परोक्षत्वम् । तर्ह्यनुमानाध्यक्षविषयस्यैकात्मग्राह्यस्याग्नेरभिन्नस्योपलम्भात् अध्यक्षस्य परोक्षतेति । तदप्ययुक्तं भिन्नविषयत्वा-

भावात् । विसदृशसामग्रीजन्या भिन्नविषया प्रतीतिः प्रतीत्यन्तरमुच्यते नान्यदिति न दोषः । न केवलमेतदेव विशेषवत्तया वा प्रतिभासनं सविशेषवर्णसंस्थानादिग्रहणं वैशद्यम् ॥ ४ ॥

तच्च प्रत्यक्षं द्वेधा । मुख्यसंव्यवहारभेदादिति मनसिकृत्य प्रथमं सांव्यवहारिकप्रत्यक्षस्योत्पादिकां सामग्रीं तद्भेदञ्च प्राह ॥ ५ ॥

विशदं ज्ञानमिति चानुवर्त्तते । देशतो विशदं ज्ञानं सांव्यवहारिकमित्यर्थः । समीचीनः प्रवृत्तिनिवृत्तिरूपो व्यवहारः संव्यवहारः । तत्र भवं सांव्यवहारिकम् । भूयः किम्भूतम् । इन्द्रियानिन्द्रियनिमित्तम् । इन्द्रियं चक्षुरादि । अनिन्द्रियं मनः । ते निमित्तं कारणं यस्य । समस्तं व्यस्तञ्च कारणमभ्युपगन्तव्यम् । इन्द्रियप्राधान्यादनिन्द्रियबलाधानादुपजातमिन्द्रियप्रत्यक्षम् । तत्रेन्द्रियप्रत्यक्षमवग्रहादिधारणापर्य्यन्ततया चतुर्विधमपि बह्वादिद्वादशभेदमष्टचत्वारिंशत्संख्यं प्रतीन्द्रियं प्रतिपत्तव्यम् । अनिन्द्रियप्रत्यक्षस्य चोक्तप्रकारेणाष्टचत्वारिंशद्भेदेन मनोनयनरहितानां चतुर्णामपि इन्द्रियाणां व्यञ्जनावग्रहस्याष्टचत्वारिंशद्भेदेन च समुदितस्येन्द्रियानिन्द्रियप्रत्यक्षस्य षट्त्रिंशदुत्तरा त्रिशती संख्या प्रतिपत्तव्या ।

ननु स्वसंवेदनभेदमन्यदपि प्रत्यक्षमस्ति तत् कथं नोक्तमिति न वाच्यम् । तस्य सुखादिज्ञानस्वरूपसंवेदनस्य मानसप्रत्यक्षत्वात् । इन्द्रियज्ञानस्वरूपसंवेदनस्य चेन्द्रियसमक्षत्वात् । अन्यथा तस्य व्यवसायायोगात् । स्मृत्यादिस्वरूपसंवेदनं मानसमेवेति नापरं स्वसंवेदनं नामाध्यक्षमस्ति ॥ ५ ॥

ननु प्रत्यक्षस्योत्पादकं कारणं वदता ग्रन्थकारेण इन्द्रियानिन्द्रियवदर्थालोकावपि किं न कारणत्वेनोक्तौ । तद्वचने कारणानां साकल्यस्यासंग्रहाद्विनेयव्यामोह एव स्यात् तदियत्तानवधारणात् । न च भगवतः परमकारुणिकस्य चेष्टा तद्व्यामोहाय प्रभवतीत्याशङ्कायामुच्यते । सुगममेतत् ॥ ६ ॥

ननु वाह्यालोकाभावं विहाय तमसोऽन्यस्याभावात् साधनविकलो दृष्टान्त इति नैवमेवं सति वाह्यालोकस्यापि तमोभावात् अन्यस्यासम्भवात् तेजोद्रव्यस्यासम्भव इति । विस्तरेणैतदलङ्कारे प्रतिपादितं बोद्धव्यम् ॥ ६ ॥

अत्रैव साध्ये हेत्वन्तरमाह ॥ ७ ॥

अत्र व्याप्तिः । यद्यस्यान्वयव्यतिरेकौ नानुविदधाति न तत्तत्कारणकं यथा केशोण्डुकज्ञानम् । नानुविधत्ते च ज्ञानमर्थान्वयव्यतिरेकाविति । तथा आलोकेऽपि । एतावान् विशेषस्तत्र नक्तञ्चरदृष्टान्त इति । नक्तञ्चरा मार्जारादयः ॥ ७ ॥

ननु विज्ञानमर्थजनितमर्थाकारञ्चार्थस्य ग्राहकं तदुत्पत्तिमन्तरेण विषयं प्रति नियमायोगात् । तदुत्पत्तेरालोकादावविशिष्टत्वात् तादूप्यसहिताया एव तस्यास्तं प्रति नियमहेतुत्वात् भिन्नकालत्वेऽपि ज्ञानज्ञेययोर्ग्राह्यग्राहकभावाविरोधात् । तथाचोक्तम्—

भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षमम् ॥

इत्याशङ्कायामिदमाह ॥ ८ ॥

अर्थाजन्यमप्यर्थप्रकाशकमित्यर्थः । अतज्जन्यत्वमुपलक्षणं तेनातदाकारमपि इत्यर्थः । उभयत्रापि प्रदीपो दृष्टान्तः । यथा प्रदीपस्यातज्जन्यस्यातदाकारधारिणोऽपि तत्प्रकाशकत्वं तथा ज्ञानस्यापीत्यर्थः ॥ ८ ॥

ननु यदार्थादजातस्यार्थरूपानुकारिणः ज्ञानस्यार्थसाक्षात्कारित्वं तत्र नियतदिग्देशकालवर्त्तिपदार्थप्रकाशप्रतिनियमे हेतोरभावात् सर्वं विज्ञानमप्रतिनियतविषयं स्यादिति शङ्कायामाह ॥ ९ ॥

स्वानि च तान्यावरणानि च स्वावरणानि तेषां क्षय उदयाभावस्तेषामेव सदवस्था उपशमः तावेव लक्षणं यस्याः योग्यतायाः । तया हेतुभूतया प्रतिनियतमर्थं व्यवस्थापयति । प्रत्यक्षमिति शेषः । हि यस्मादर्थे । यस्मादेवं ततो नोक्तदोष इत्यर्थः । इदमत्र तात्पर्यं कल्पयित्वापि तादूप्यं तदुत्पत्तिं तदध्यवसायञ्च योग्यताविश्रममभ्युपगन्तव्या । तादूप्यस्य समानार्थैः तदुत्पत्तेरिन्द्रियादिभिः तद्द्वयस्यापि समानार्थसमनन्तरप्रत्ययैः तत्त्रितयस्यापि शुक्ले शङ्खे पीताकारज्ञानेन व्यभिचाराद् योग्यताश्रयणमेव श्रेय इति । एतेन यदुक्तं परेण —

अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपताम् ।
तस्मात् प्रमेयाधिगतेः प्रमाणं मेयरूपता ॥ इति

तन्निरस्तं समानार्थाकारनानाज्ञानेषु मेयरूपतायाः सद्भावात् । न च परेषां सारूप्यं नामास्ति वस्तुभूतमिति योग्यतयैवार्थप्रतिनियम इति स्थितम् ॥ ९ ॥

इदानीं कारणत्वात् परिच्छेद्योऽर्थ इति मतं निराकरोति ॥ १० ॥

करणादिकारणं न परिच्छेद्यमित्यनेन व्यभिचारः । न ब्रूमः कारणत्वात् परिच्छेद्यत्वं अपि तु परिच्छेद्यत्वात् कारणत्वमिति चेन्न । तथापि केशोण्डुकादिना व्यभिचारात् ॥ १० ॥

इदानीमतीन्द्रियप्रत्यक्षं व्याचष्टे ॥ ११ ॥

सामग्री द्रव्यक्षेत्रकालभावलक्षणा । तस्या विशेषः समग्रतालक्षणस्तेन विश्लेषितानि अखिलान्यावरणानि येन तत्तथोक्तम् । किं विशिष्टम् । अतीन्द्रियमिन्द्रियातिक्रान्तम् । पुनरपि कीदृशमशेषतः सामस्त्येन विशदम् । अशेषतो वैशद्ये किं कारणमिति चेत् प्रतिबन्धाभाव इति ब्रूमः । तत्रापि किं कारणमिति चेत् । अतीन्द्रियत्वमनावरणत्वञ्चेति ब्रूमः ॥ ११ ॥

एतदपि कुत इत्याह ॥ १२ ॥

नन्ववधिमनःपर्य्याययोरनेनासंग्रहादव्यापकमेतल्लक्षणमिति न वाच्यम् । तयोरपि स्वविषये अशेषतो विशदत्वादिधर्म्मसंभवात् । न चैवं मतिश्रुतयोरित्यतिव्याप्तिपरिहारः । तदेतदतीन्द्रियमवधिमनःपर्य्यायकेवलभेदात् । त्रिविधमपि मुख्यं प्रत्यक्षमात्मसन्निधिमात्रापेक्षत्वादिति ।

नन्वशेषविषयविशदावभासिज्ञानस्य तद्वतो वा प्रत्यक्षादिप्रमाणपञ्चकाविषयत्वेनाभावप्रमाणविषयत्वेन विध्वस्तसत्ताकत्वात् कस्य मुख्यत्वम् । तथा हि नाध्यक्षमशेषज्ञविषयं तस्य रूपादिनियतगोचरचारित्वात् संबद्धवर्त्तमानविषयत्वाच्च । न चाशेषवेदी संबद्धो वर्त्तमानश्चेति ।

नाप्यनुमानात्तत्सिद्धिरनुमानं हि गृहीतसम्बन्धस्यैकदेशदर्शनादसन्निकृष्टे बुद्धिः । न च सर्व्वज्ञसद्भावाविनाभाविकार्य्यलिङ्गं स्वभावलिङ्गं वा संपश्यामः । तज्जन्मनः पूर्व्वं तत्स्वभावस्य तत्कार्य्यस्य वा तत्सद्भावाविनाभाविनो निश्चेतुमशक्तेः । नाप्यागमात् तत्सद्भावः । स हि नित्योऽनित्यो वा तत्सद्भावं भावयेत् । न तावन्नित्यः । तस्यार्थवादरूपस्य कर्म्मविशेषसंस्तवनपरत्वेन पुरुषविशेषावबोधकत्वायोगात् । अनादेरागमस्यादिमत्पुरुषवाचकत्वाघटनाच्च ।

नाप्यनित्य आगमः सर्व्वज्ञं साधयति तस्यापि तत्प्रणीतस्य सर्व्वज्ञमन्तरेण प्रामाण्या

निश्चयात्। इतरेतराश्रयत्वाच्च। इतरप्रणीतस्य त्वनासादितप्रमाणभावस्याशेषज्ञप्ररूपणपरत्वं नितरामसम्भाव्यमिति। सर्वज्ञसदृशस्य परस्य ग्रहणासम्भवाच्च नोपमानमनन्यथाभूतस्यार्थस्याभावान्नार्थापत्तिरपि सर्वज्ञावबोधिकेति। धर्माद्युपदेशस्य व्यामोहादपि सम्भवात्। द्विविधो ह्युपदेशः सम्यग्मिथ्योपदेशभेदात्। तत्र मन्वादीनां सम्यगुपदेशो यथार्थज्ञानोदयवेदमूलत्वात्। बुद्धादीनान्तु व्यामोहपूर्वकः तदमूलत्वात्। तेषामवेदार्थज्ञत्वात्। ततः प्रमाणपञ्चकाविषयत्वादभावप्रमाणस्यैव प्रवृत्तिस्तेन चाभाव एव ज्ञायते। भावांशे प्रत्यक्षादिप्रमाणपञ्चकस्य व्यापारादिति।

अत्र प्रतिविधीयते। यत्तावदुक्तं प्रत्यक्षादिप्रमाणाविषयत्वमशेषज्ञस्येति। तदयुक्तम्। तद्ग्राहकस्यानुमानस्य सम्भवात्। तथाहि कश्चित् पुरुषः सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वात्। यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययं तत्तत्साक्षात्कारि। यथापगततिमिरलोचनं रूपसाक्षात्कारि। तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च विवादापन्नः कश्चिदिति सकलपदार्थग्रहणस्वभावत्वं नात्मनो सिद्धम्। चोदनातः सकलपदार्थपरिज्ञानस्यान्यथायोगादन्धस्येवादर्शाद्रूपप्रतीतेरिति। व्याप्तिज्ञानोत्पत्तिबलाच्चाशेषविषयज्ञानसम्भवः। केवलं वैशद्ये विवादः।

तत्र चावरणापगम एव कारणं रजोनीहाराद्यावृतार्थज्ञानस्येव तदपगम इति प्रक्षीणप्रतिबन्धप्रत्ययत्वं कथमिति चेदुच्यते दोषावरणे क्वचिन्निर्मूलं प्रलयमुपव्रजतः प्रकृष्यमाणहानिकत्वात्। यस्य प्रकृष्यमाणा हानिः स क्वचिन्निर्मूलं प्रलयमुपव्रजति यथाग्निपुटपाकापसारितकिट्टकालिकाद्यन्तरङ्गबहिरङ्गमलद्वयात्मनि हेम्नि मलमिति। निर्ह्रासातिशयवती च दोषावरणे इति कथं पुनर्विवादाध्यासितस्य ज्ञानस्यावरणं सिद्धं प्रतिषेधस्य विधिपूर्वकत्वात् इति॥

अत्रोच्यते। विवादापन्नं ज्ञानं सावरणमविशदतया स्वविषयावबोधकत्वाद्रजोनीहाराद्यन्तरितार्थज्ञानवदिति। न चात्मनोऽमूर्त्तत्वादावरकावृत्त्ययोगः। अमूर्त्ताया अपि चेतनाशक्तेर्मदिरामदनकोद्रवादिभिरावरणोपपत्तेः। न चेन्द्रियस्य तैरावरणम् इन्द्रियाणामचेतनानामप्यनावृतप्रख्यत्वात् स्मृत्यादिप्रतिबन्धायोगात्। नापि मनसस्तैरावरणमात्मव्यतिरेकेणापरस्य मनसो निषेत्स्यमानत्वात्। ततो नामूर्त्तस्यावरणाभावः। अतो नासिद्धं तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वम्। नापि विरुद्धं विपरीतनिश्चिताविनाभावाभावात्। नाप्यनैकान्तिकं देशतः सामस्त्येन वा विपक्षे वृत्त्यभावात्। विपरीतार्थोपस्थापकप्रत्यक्षागमासम्भवान्न कालात्ययोपदिष्टत्वम्। नापि सत्प्रतिपक्षत्वं प्रतिपक्षसाधनस्य हेतोरभावात्।

अथेदमस्त्येव विवादापन्नः पुरुषो नाशेषज्ञः वक्तृत्वात् पुरुषत्वात् पाण्यादिमत्त्वाच्च रथ्यापुरुषवदिति। नैतच्चारु। वक्तृत्वादेरसम्यग्घेतुत्वात्। वक्तृत्वं हि दृष्टेष्टविरुद्धार्थवक्तृत्वं तदविरुद्धवक्तृत्वं वक्तृत्वसामान्यं वा। गत्यन्तराभावात्। न तावत् प्रथमः पक्षः सिद्धसाध्यतानुषङ्गात्। नापि द्वितीयः पक्षः विरुद्धत्वात्। तदविरुद्धवक्तृत्वं हि ज्ञानातिशयमन्तरेण नोपपद्यत इति। वक्तृत्वसामान्यमपि विपक्षाविरुद्धत्वात् न प्रकृतसाध्यसाधनायालं ज्ञानप्रकर्षे वक्तृत्वापकर्षादर्शनात्। प्रत्युत ज्ञानातिशयवतो वचनातिशयस्यैव सम्भवात्।

एतेन पुरुषत्वमपि निरस्तम्। पुरुषत्वं हि रागादिदोषदूषितं तदा सिद्धसाध्यता। तददूषितन्तु विरुद्धं वैराग्यविज्ञानादिगुणयुक्तपुरुषत्वस्याशेषज्ञत्वमन्तरेणायोगात्। पुरुषत्व-

सामान्यन्तु सन्दिग्धविपक्षव्यावृत्तिकमिति सिद्धं सकलपदार्थसाक्षात्कारित्वं कस्यचित् पुरुषस्यातोऽनुमानादिति न प्रमाणपञ्चकविषयत्वमशेषज्ञस्य ।

अथास्मिन्ननुमानेऽर्हतः सर्वविस्त्वमनर्हतो वा । अनर्हतश्चेदर्हद्वाक्यमप्रमाणं स्यात् । अर्हतश्चेत् सोऽपि न श्रुत्या सामर्थ्येन वाविगन्तुं पार्यते । स्वशक्त्या दृष्टान्तानुग्रहेण वा हेतोः पक्षान्तरेऽपि तुल्यवृत्तित्वात् इति । तदेतत्परेषां स्ववधाय कृत्योत्थापनमेवंविधविशेषप्रश्नस्य सर्वज्ञसामान्याभ्युपगमपूर्वकत्वात् । अन्यथा न कस्याप्यशेषज्ञत्वमित्येवं वक्तव्यम् ।

प्रसिद्धानुमानेऽप्यस्य दोषस्य सम्भवेन जात्युत्तरत्वाच्च । तथाहि नित्यः शब्दः प्रत्यभिज्ञायमानत्वादित्युक्ते व्यापकः शब्दो नित्यः प्रसाध्यते अव्यापको वा । यद्यव्यापकः तदा व्यापकत्वेन उपकल्प्यमानो न कञ्चिदर्थं पुष्णाति । अथ व्यापकः सोऽपि न श्रुत्या सामर्थ्येन वावगम्यते । स्वशक्त्या दृष्टान्तानुग्रहेण वा पक्षान्तरेऽपि तुल्यवृत्तित्वादिति । सिद्धमतो निर्दोषात् साधनादशेषज्ञत्वमिति ।

यच्चाभावप्रमाणकवलितसत्ताकत्वमशेषज्ञस्येति तदयुक्तमेवानुमानस्य तद्ग्राहकस्य सद्भावे सति प्रमाणपञ्चकाभावमूलस्याभावप्रमाणस्योत्थानायोगात् ।

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥

इति च तावत्कं दर्शनम् । तथा च कालत्रयत्रिलोकलक्षणवस्तुसद्भावग्रहणे अन्यान्यदा गृहीतसर्वज्ञस्मरणे च सर्वज्ञनास्तिताज्ञानमभावप्रमाणं युक्तम् । नापरथा । न च कस्यचिदर्वाग्दर्शिनस्त्रिजगत्त्रिकालज्ञानमुपपद्यते सर्वज्ञस्यातीन्द्रियस्य वा । सर्वज्ञत्वं हि चेतोधर्मतयातीन्द्रियम् । तदपि न प्राकृतपुरुषविषय इति कथमभावप्रमाणमुदयमासादयेत् । असर्वज्ञस्य तदुत्पादकसामग्र्या असम्भवात् । सम्भवे तथा ज्ञातुरेव सर्वज्ञत्वमिति ।

अत्राधुना तदभावसाधनमित्यपि न युक्तं सिद्धसाध्यतानुषङ्गात् । ततः सिद्धं मुख्यमतीन्द्रियज्ञानमशेषतोविशदम् । सार्वज्ञज्ञानस्यातीन्द्रियत्वात् अशुच्यादिदर्शनं तद्रसास्वादनदोषोऽपि परिहृत एव ।

कथमतीन्द्रियज्ञानस्य वैशद्यमिति चेत् यथा सत्यस्वप्नज्ञानस्य भावनाज्ञानस्य चेति । दृश्यते हि भावनाबलादतद्देशवस्तुनोऽपि विशददर्शनमिति ।

पिहिते कारागारे तमसि च सूचीमुखाग्रदुर्भेद्ये ।
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥

इति बहुलमुपलम्भात् ।

ननु च नावरणविश्लेषादशेषज्ञत्वमपितु तनुकरणभुवनादिनिमित्तत्वेन । न चात्र तन्वादीनां बुद्धिमद्धेतुकत्वमसिद्धमनुमानादेस्तस्य सुप्रसिद्धत्वात् । तथाहि विमत्यधिकरणभावापन्नं उर्वीपर्वततरुतन्वादिकं बुद्धिमद्धेतुकं कार्य्यत्वात् अचेतनोपादानत्वात्सन्निवेशविशिष्टत्वाद्वा वस्त्रादिवदिति । आगमोऽपि तदावेदकः श्रूयते ।

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥

तथा व्यासवचनञ्च ।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥

अथाचेतनैरेव परमाण्वादिकारणैः पर्य्याप्तत्वाद्बुद्धिमतः कारणस्यानर्थक्यं अचेतनानां स्वयं कार्य्योत्पत्तौ व्यापारायोगात् तुर्य्यादिवत्। न चैवं चेतनस्यापि चेतनान्तरपूर्व्वकत्वात् अनवस्था तस्य सकलपुरुषधुर्य्यत्वान्निरतिशयत्वात् सर्व्वज्ञबीजस्य क्लेशकर्म्मविपाकाशयैर-परामृष्टत्वात् अनादिभूतानश्वरज्ञानसम्भवाच्च।

यदाह पतञ्जलिः क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। तत्र निरतिशयं सर्व्वज्ञबीजम्। स एषः पूर्व्वेषामपि गुरुः कालेनानवच्छेदादिति च।

ऐश्वर्य्यमप्रतिहतं सहजो विराग-
स्तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु।
आत्यन्तिकं सुखमनावरणा च शक्ति-
र्ज्ञानञ्च सर्व्वविषयं भगवंस्तवैव॥

इत्यवधूतवचनाच्च। न चात्र कार्य्यत्वमसिद्धं सावयवत्वेन कार्य्यत्वसिद्धेः। नापि विरुद्धं विपक्ष एव वृत्त्यभावात्। नाप्यनैकान्तिकं विपक्षे परमाण्वादावप्रवृत्तेः। प्रतिपक्ष-सिद्धिनिबन्धनस्य साधनान्तरस्याभावात् न प्रकरणसमम्।

अथ तन्वादिकं बुद्धिमद्धेतुकं न भवति दृष्टकर्तृकप्रासादादिविलक्षणत्वात् आकाशादिवदित्ययमेव प्रतिपक्षसाधनमिति। नैतद्युक्तं हेतोरसिद्धत्वात्। सन्निवेशविशिष्टत्वेन प्रासादादिसमानजातीयत्वेन तन्वादीनामुपलम्भात्।

अथ यादृशः प्रासादादौ सन्निवेशविशेषो दृष्टः न तादृशस्तन्वादाविति चेत् न सर्व्वात्मना सदृशस्य कस्यचिदप्यभावात्। सातिशयसन्निवेशो हि सातिशयं कर्त्तारं गमयति प्रासादादिवत्। न च दृष्टकर्तृकादृष्टकर्तृकाभ्यां बुद्धिमन्निमित्तेतरत्वसिद्धिः कृत्रिमैर्मणि-मुक्ताफलादिभिर्व्यभिचारात्। एतेनाचेतनोपादानत्वादिकमपि समर्थितमिति सूक्तं बुद्धि-मद्धेतुकत्वं ततश्च सर्व्ववेदित्वमिति।

तदेतत्सर्व्वमनुमानमुद्राद्रविणदरिद्रवचनमेव कार्य्यत्वादेरसम्यग्घेतुत्वेन तज्जनित-ज्ञानस्य मिथ्यारूपत्वात्। तथाहि कार्य्यत्वं स्वकारणसत्तासमवायः स्यात् अभूत्वा भावित्वम् अक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वं कारणव्यापारानुविधायित्वं वा स्यात् गत्यन्तराभावात्। अथाद्यः पक्षस्तदा योगिनामशेषकर्म्मप्रक्षये पक्षान्तःपातिनि हेतोः कार्य्यत्वलक्षणस्याप्रवृत्तेः भागासिद्धत्वम्। न च तत्र सत्तासमवायः स्वकारणसमवायो वा समस्ति तत्प्रक्षयस्य प्रध्वंसरूपत्वेन सत्तासमवाययोरभावात्। सत्ताया द्रव्यगुणक्रिया-धारत्वाभ्यनुज्ञानात् समवायस्य च परैः द्रव्यादिपञ्चपदार्थवृत्तित्वाभ्युपगमात्।

अथाभावपरित्यागेन भावस्यैव विवादाध्यासितस्य पक्षीकरणान्नायं दोषः प्रवेशभागिति चेत्। तर्हि मुक्त्यर्थिनां तदर्थमीश्वराराधनमनर्थकमेव स्यात् तत्र तस्याकिञ्चित्करत्वात्। सत्ता-समवायस्य विचारमधिरोहतः शतधा विशीर्य्यमाणत्वात्। स्वरूपासिद्धञ्च कार्य्यत्वम्। स हि समुत्पन्नानां भवेदुत्पद्यमानानां वा। यद्युत्पन्नानां सतामसतां वा? न तावदसतां खरविषाणादेरपि तत्प्रसङ्गात्। सताञ्चेत्। सत्तासमवायात् स्वतो वा। न तावत् सत्तासमवायादनवस्थाप्रसङ्गात्। प्रागुक्तविकल्पद्वयानतिवृत्तेः। स्वतःसतान्तु सत्तासमवायानर्थक्यम्।

अथोत्पद्यमानानां सत्तासम्बन्धनिष्पत्तिसम्बन्धयोरेककालत्वाभ्युपगमादिति मतम्। तदा सत्तासम्बन्ध उत्पादाद्भिन्नः किं वा अभिन्नः? इति। यदि भिन्नस्तदोत्पत्तेरसत्त्वा-विशेषादुत्पत्त्यभावयोः किं कृतो भेदः।

अथोत्पत्तिसमाक्रान्तवस्तुसत्त्वेनोत्पत्तिरपि तथा व्यपदिश्यते इति मतं तदप्यतिजाड्यविलसितमेवोत्पत्तिसत्त्वं प्रति विवादे वस्तुसत्त्वस्यातिदुर्घटत्वात् । इतरेतराश्रयदोषश्च । इत्युत्पत्तिसत्त्वे वस्तुनि सदेककालीनसत्तासम्बन्धावगमः तदवगमे च तत्रत्यसत्त्वेनोत्पत्तिसत्त्वनिश्चय इति ।

अथैतद्दोषपरिजिहीर्षया तयोरैक्यमप्यनुज्ञायते । तर्हि तत्सम्बन्ध एव कार्य्यत्वमिति । ततो बुद्धिमद्धेतुकत्वे गगनादिभिरनैकान्तः । एतेन स्वकारणसम्बन्धोऽपि चिन्तितः ।

अथोभयसम्बन्धो कार्य्यत्वमिति मतिः । साऽपि न युक्ता । तत्सम्बन्धस्यापि कादाचित्कत्वे समवायस्यानित्यत्वप्रसङ्गात् घटादिवत् । अकादाचित्कत्वे सर्व्वदोपलम्भप्रसङ्गः ।

अथ वस्तूत्पादककारणानां सन्निधानाभावान्न सर्व्वदोपलम्भप्रसङ्गः । ननु वस्तूत्पत्त्यर्थं कारणानां व्यापारः । उत्पादश्च स्वकारणसत्तासमवायः । स च सर्व्वदाप्यस्ति इति तदर्थं कारणोपादानमनर्थकमेव स्यात् । अभिव्यक्त्यर्थं तदुपादानमित्यपि वार्त्तम् । वस्तूत्पादापेक्षयाभिव्यक्तेरघटनात् । वस्त्वपेक्षयाभिव्यक्तौ कारणसम्पातात् प्रागपि कार्य्यवस्तुसद्भावप्रसङ्गात् । उत्पादस्याप्यभिव्यक्तिरसम्भाव्या । स्वकारणसत्तासम्बन्धलक्षणस्योत्पादस्यापि कारणव्यापारात्प्राक्सद्भावे वस्तुसद्भावप्रसङ्गात् । तल्लक्षणत्वाद्वस्तुसत्त्वस्य । प्राक्सत एव हि केनचित् तिरोहितस्याभिव्यञ्जकेनाभिव्यक्तिस्तमस्तिरोहितस्य घटस्येव प्रदीपादिनेति । तन्नाभिव्यक्त्यर्थं कारणोपादानं युक्तम् ।

तन्न स्वकारणसत्तासम्बन्धः कार्य्यत्वम् । नाप्यभूत्वाभावित्वं तस्यापि विचारासहत्वात् । अभूत्वाभावित्वं हि भिन्नकालक्रियाद्वयाधिकरणभूते कर्त्तरि सिद्धे सिद्धिमध्यास्ते क्त्वान्तपदविशेषितवाक्यार्थत्वात् भुक्त्वा व्रजतीत्यादिवाक्यार्थवत् । न चात्र भवनाभवनयोराधारभूतस्य कर्त्तुरनुभवोऽस्ति । अभवनाधारस्याविद्यमानत्वेन भावनाधारस्य च विद्यमानतया भावाभावयोरेकाश्रयविरोधात् । अविरोधे च तयोः पर्य्यायमात्रेणैव भेदो न वास्तव इति ।

अस्तु वा यथाकथञ्चिदभूत्वा भावित्वं तथापि तन्वादौ सर्व्वत्रानभ्युपगमात् भागासिद्धम् । न हि महीधराकूपारारामादयः प्रागभूत्वा भवन्तोऽभ्युपगम्यन्ते परैस्तेषां तैः सर्व्वदावस्थानाभ्युपगमात् ।

अथ सावयवत्वेन तेषामपि सादित्वं प्रसाध्यते तदप्यशिक्षितलक्षितम् । अवयवेषु वृत्तेरवयवैरारभ्यत्वेन च सावयवत्वानुपपत्तेः । प्रथमपक्षे अवयवसामान्येनानेकान्तात् । द्वितीयपक्षे साध्याविशिष्टत्वात् ।

अथ सन्निवेश एव सावयवत्वम् । तच्च घटादिवत् । पृथिव्यादावुपलभ्यते इत्यभूत्वा भावित्वमभिधीयते । तदप्यपेशलम् । सन्निवेशस्यापि विचारासहत्वात् । स अवयवसम्बन्धो भवेत् रचनाविशेषो वा । यद्यवयवसम्बन्धस्तदा गगनादिनानेकान्तः । सकलमूर्त्तिमद्द्रव्यसंयोगनिबन्धनप्रदेशनानात्वस्य सद्भावात् ।

अथोपचरिता एव तत्र प्रदेशा इति चेत् । तर्हि सकलमूर्त्तिमद्द्रव्यसम्बन्धस्यापि उपचरितत्वात् सर्व्वगतत्वमप्युपचरितं स्यात् । श्रोत्रस्यार्थक्रियाकारित्वञ्च न स्यात् उपचरितप्रदेशरूपत्वात् । धर्म्मादिना संस्कारात्ततः सेत्ययुक्तम् । उपचरितस्यासद्रूपस्य तेनोपकारायोगात् खरविषाणस्येव, ततो नकिञ्चिदेतत् ।

अथ रचनाविशेषः तदा परं प्रति भागासिद्धत्वं तदवस्थमेवेति नाभूत्वाभावित्वं

विचारं सहते । नाप्यक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वम् । तद्धि कृतसमयस्याकृतसमयस्य वा भवेत् । कृतसमयस्य चेत् गगनादेरपि बुद्धिमद्धेतुकत्वं स्यात् । तत्रापि खननोत्सेचनात् कृतमिति गृहीतसङ्केतस्य कृतबुद्धिसम्भवात् । सा मिथ्येति चेत् भवदीयापि किं न स्यात् । बाधासद्भावस्य प्रतिप्रमाणविरोधस्य चान्यत्रापि समानत्वात् । प्रत्यक्षेणोभयत्रापि कर्त्तुरग्रहणात् । क्षित्यादिकं बुद्धिमद्धेतुकं न भवति अस्मदाद्यनवग्राह्यपरिमाणाधारत्वात् गगनादिवदिति प्रमाणस्य साधारणत्वात् ।

तन्न कृतसमयस्य कृतबुद्ध्युत्पादकत्वम् । नाप्यकृतसमयस्यासिद्धत्वाद्विप्रतिपत्ति-प्रसङ्गाच्च । कारणव्यापारानुविधायित्वञ्च कारणमात्रापेक्षया यदीष्यते तदा विरुद्धं साधनम् । कारणविशेषापेक्षया चेदितरेतराश्रयत्वम् । सिद्धे हि कारणविशेषे बुद्धिमति तदपेक्षया कारणव्यापारानुविधायित्वं कार्य्यत्वं ततस्तद्विशेषसिद्धिरिति सन्निवेशविशिष्टत्वम-चेतनोपादानत्वञ्चोक्तदोषदुष्टत्वान्न पृथक् चिन्त्यते । स्वरूपभागासिद्धत्वादेस्तत्रापि सुलभ-त्वात् । विरुद्धाश्चामी हेतवो दृष्टान्तानुग्रहेण अशरीरासर्वज्ञपूर्वकत्वसाधनात् । न धूमात् पावकानुमानेऽप्ययं दोषः । तत्र तार्णपार्णादिविशेषाधाराग्निमात्रव्याप्तधूमस्य दर्शनात् ।

नैवमत्र सर्वज्ञासर्वज्ञकर्त्तृविशेषाधिकरणतत्सामान्येन कार्य्यत्वस्य व्याप्तिः । सर्वज्ञस्य कर्त्तुरतोऽनुमानात् प्रागसिद्धत्वात् । व्यभिचारिणश्चामी हेतवः बुद्धिमत्कारणमन्तरेणापि विद्युदादीनां प्रादुर्भावसम्भवात् । सुप्ताद्यवस्थायां अबुद्धिपूर्वकस्यापि कार्यस्य दर्शनात् । तदवश्यं तत्रापि भर्गाख्यं कारणमित्यतिमुग्धविलसितम् । तद्व्यापारस्याप्यसम्भवात् अशरीर-त्वात् ज्ञानमात्रेण कार्य्यकारित्वाघटनादिच्छाप्रयत्नयोः शरीराभावेऽसम्भवात् । तदसम्भवश्च पुरातनैर्विस्तरेणाभिहित आप्तपरीक्षादौ । अतः पुनरत्र नोच्यते ॥

यच्च महेश्वरस्य क्लेशादिभिरपरामृष्टत्वं निरतिशयत्वमैश्वर्य्याद्युपेतत्वं तत् सर्वमपि गगनाब्जसौरभव्यावर्णनमिव निर्विषयत्वादुपेक्षामर्हति । ततो न महेश्वरस्याशेषज्ञत्वम् । नापि ब्रह्मणः । तस्यापि सद्भावावेदकप्रमाणाभावात् । न तावत् प्रत्यक्षं तदावेदकम-विप्रतिपत्तिप्रसङ्गात् । न चानुमानमविनाभाविलिङ्गाभावात् ।

ननु प्रत्यक्षं तद्ग्राहकमस्त्येवाक्षिविस्फालनानन्तरं निर्विकल्पकस्य सन्मात्रविधि-विषयतयोत्पत्तेः । सत्तायाश्च परमब्रह्मरूपत्वात् । तथाचोक्तम् ।

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥

न च विधिवत् परस्परव्यावृत्तिरप्यध्यक्षतः प्रतीयते इति द्वैतसिद्धिः । तस्य निषेधाविषयत्वात् । तथाचोक्तम् ।

आहुर्विधातृप्रत्यक्षं न निषेद्धृविपश्चितः ।
नैकत्वे आगमस्तेन प्रत्यक्षेण प्रबाध्यते ॥

अनुमानादपि तत्सद्भावो विभाव्यत एव । तथाहि । ग्रामारामादयः पदार्थाः प्रतिभासान्तःप्रविष्टाः प्रतिभासमानत्वात् । यत् प्रतिभासते तत् प्रतिभासान्तःप्रविष्टं यथा प्रतिभासस्वरूपम् । प्रतिभासन्ते च विवादापन्ना इति । तदागमानामपि-पुरुष एवेदं यद्भूतं यच्च भाव्यमिति बहुलमुपलम्भात् । सर्वं वै खल्विदं ब्रह्म, नेह नानास्ति किञ्चन । आरामं तस्य पश्यन्ति न तं पश्यति कश्चनेति श्रुतेश्च ।

ननु परमब्रह्मण एव परमार्थसत्त्वे कथं घटादिभेदोऽवभासते । इति न चोद्यम् ।

सर्व्वत्रापि तद्विवर्त्ततयावभासनात्। न चाशेषभेदस्य तद्विवर्त्तत्वमसिद्धम्। प्रमाणप्रसिद्धत्वात्। तथाहि विवादाध्यासितं विश्वमेककारणपूर्व्वकमेकरूपान्वितत्वात्। घटघटीशरावोदञ्चनादीनां मृद्रूपान्वितानां यथा मृदेककारणपूर्व्वकत्वं सद्रूपेणान्वितञ्च निखिलं वस्त्विति। तथागमोऽप्यस्ति।

ऊर्णनाभ इवांशूनां चन्द्रकान्त इवाम्भसाम्।
प्ररोहाणामिव प्लक्षः स हेतुः सर्व्वजन्मिनाम्॥ इति॥

तदेतन्मदिरारसास्वादगद्गदोदितमिव। मदनकोद्रवाद्युपयोगजनितव्यामोहमुग्धविलसितमिव निखिलमवभासते विचारासहत्वात्। तथाहि यत् प्रत्यक्षस्य सत्ताविषयत्वमभिहितं तत्र किं निर्विशेषसत्ताविषयत्वं सविशेषसत्तावबोधकत्वं वा। न तावत् पौरस्त्यः पक्षः सत्तायाः सामान्यरूपत्वाद्विशेषनिरपेक्षतयानवभासनात्। शावलेयादिविशेषानवभासने गोत्वानवभासवत्। निर्व्विशेषं हि सामान्यं भवेच्छशविषाणवदित्यभिधानात्। सामान्यरूपत्वञ्च सत्तायाः सत्सदित्यन्वयबुद्धिविषयत्वेन सुप्रसिद्धमेव।

अथ पाश्चात्यः पक्षः कक्षीक्रियते। तदा न परमपुरुषसिद्धिः। परस्परव्यावृत्ताकारविशेषाणामध्यक्षतोऽवभासनात्। यदपि साधनमभ्यधायि प्रतिभासमानत्वं तदपि न साधु विचारासहत्वात्। तथा हि प्रतिभासमानत्वं स्वतः परतो वा। न तावत् स्वतोऽसिद्धत्वात्। परतश्चेद्विरुद्धम्। परतः प्रतिभासमानत्वं हि परं विना नोपपद्यते। प्रतिभासमानमात्रमपि न सिद्धिमधिवसति। तस्य तद्विशेषणान्तरीयकत्वात्। तद्विशेषाभ्युपगमे द्वैतप्रसक्तिः।

किञ्च धर्म्मिहेतुदृष्टान्ता अनुमानोपायभूताः प्रतिभासन्ते न वेति। प्रथमपक्षे प्रतिभासान्तःप्रविष्टाः प्रतिभासबहिर्भूता वा। यद्याद्यः पक्षस्तदा साध्यान्तःपातित्वान्न ततोऽनुमानं, तद्बहिर्भावः तैरेव हेतोर्व्यभिचारः। अप्रतिभासमानत्वेऽपि तद्व्यवस्थाभावात्। ततो नानुमानमिति।

अथानाद्यविद्याविजृम्भितत्वात् सर्व्वमेतदसम्बद्धमित्यप्यनल्पतमोविलसितम्। अविद्यायामप्युक्तदोषानुषङ्गात्। सकलविकल्पविकलत्वात्तस्या नैष दोष इत्यप्यतिमुग्धभाषितम्। केनापि रूपेण तस्याः प्रतिभासाभावे तत्स्वरूपानवधारणात्। अपरमप्यत्र विस्तरेण देवागमालङ्कारे चिन्तितमिति नेह प्रतन्यते।

यच्च परमब्रह्मविवर्त्तत्वं अखिलभेदानामित्युक्तं तत्राप्येकरूपेणान्वितत्वं हेतुरन्वीयमानद्वयाविनाभावित्वेन पुरुषाद्वैतं प्रतिबध्नाति इति स्वेष्टविघातकारित्वाद्विरुद्धः। अन्वितत्वमेकहेतुके स्तम्भकुम्भाम्भोरुहादावपि उपलभ्यत इत्यनैकान्तिकश्च। किमर्थञ्चेदं कार्य्यमसौ विदधाति अन्येन प्रयुक्तत्वात् कृपावशात् क्रीड़ावशात् स्वभावाद्वा। अन्येन प्रयुक्तत्वे स्वातन्त्र्यहानिः द्वैतप्रसङ्गश्च। कृपावशादिति नोत्तरम्। कृपायां दुःखिनामकरणप्रसङ्गात्। परोपकारकरणनिरतत्वात्तस्याः सृष्टेः प्रागनुकम्पाविषयप्राणिनामभावाच्च न सा युज्यते। कृपापरस्य प्रलयविधानायोगाच्च। अदृष्टवशात् तद्विधाने स्वातन्त्र्यहानिः। कृपापरस्य पीड़ाकरणादृष्टव्यपेक्षायोगाच्च। क्रीड़ावशात् प्रवृत्तौ न प्रभुत्वं क्रीड़ोपायव्यपेक्षणात् बालकवत्। क्रीड़ोपायस्य तत्साध्यस्य च युगपदुत्पत्तिप्रसङ्गश्च। सति समर्थ कारणे कार्य्यस्यावश्यम्भावात्। अन्यथा क्रमेणापि सा ततो न स्यात्।

अथ स्वभावादसौ जगन्निर्मिणोति यथाग्निर्दहति वायुर्वाति इति मतं तदपि

बालभाषितमेव पूर्वोक्तदोषानिवृत्तेः। तथा हि क्रमवर्त्ति विवर्त्तजातमखिलमपि युगपद्- व्याप्ततापेक्षणीयस्य सहकारिणोऽपि तत्साध्यत्वेन यौगपद्यासम्भवात्। उदाहरणं चेदमुक्तम्। वक्त्रादेः कारणविशेषस्य हेतुजनितस्य नियतशक्त्यात्मकत्वाभ्युपगमेऽत्र नित्यव्यापकैक-स्वभावकारणजन्यत्वेन देशकालप्रतिनियमस्य कार्य्ये दुरुपपादात्।

तदेवं ब्रह्मणोऽसिद्धौ वेदानां तन्मुखप्रवृत्तीवस्थात्वप्रतिपादनं परं कुसुमसम-भूतनिःश्वसिताभिधानञ्च गगनारविन्दमकरन्दव्यावर्णनवदनवधेयार्थविषयमेवेत्यवसेयमिति। यच्चागमः प्रमाणं सर्वं वै खल्विदं ब्रह्मेत्यादि। ऊर्णनाभ इत्यादि च। ततस्सद्भूमप्रत्यक्षविरोधिना अद्वैतविरोधीति नावकाशं लभते। न चापौरुषेय आगमोऽस्तीत्यग्रे प्रपञ्चयिष्यते। तस्मान्न पुरुषोत्तमोऽपि विचारणां प्राञ्चति॥

प्रत्यक्षेतरभेदभिन्नममलं मानं द्विधैवोदितं
देवैर्दिव्यगुणैः विचार्य्य विधिवत् संख्याततः संग्रहात्।
मानानामिति तद्विगण्यभिहितं श्रीरत्ननन्द्याह्वयैः
तद्व्याख्यानमदो विशुद्धधिषणैर्बोद्धव्यमव्याहतम्॥
मुख्यसंव्यवहाराभ्यां प्रत्यक्षमुपदर्शितम्।
देवोक्तमुपजीवद्भिः सूरिभिर्ज्ञापितं मया॥

इति परीक्षामुखस्य लघुवृत्तौ द्वितीयः समुद्देशः॥ २॥

---

अथेदानीमुद्दिष्टे प्रत्यक्षेतरभेदेन प्रमाणद्वित्वे प्रथमभेदं व्याख्याय इतरद् व्याचष्टे॥ १॥

उक्तप्रतिपक्षमितरशब्दो ब्रूते। ततः प्रत्यक्षादितरदर्थादेव लभ्यते। तच्च परोक्षमिति॥१॥

तस्य च सामग्रीस्वरूपे निरूपयन्नाह॥ २॥

प्रत्यक्षादिनिमित्तमित्यादिशब्देन परोक्षमपि गृह्यते। तच्च यथावसरं निरूपयिष्यते। प्रत्यक्षादिनिमित्तं यस्येति विग्रहः। स्मृत्यादिषु द्वन्द्वः। ते भेदा यस्येति विग्रहः॥ २॥

तत्र स्मृतिं क्रमप्राप्तां दर्शयन्नाह॥ ३॥

संस्कारस्योद्बोधः प्राकट्यम्। स निबन्धनं यस्याः सा तथोक्ता। तदित्याकारा तदित्यु-ल्लेखिनी। एवंभूता स्मृतिर्भवतीति शेषः॥ ३॥

उदाहरणमाह॥ ४॥

प्रत्यभिज्ञानं प्रागुक्तालमाह॥ ५॥

अत्र दर्शनस्मरणकारणकत्वात् सादृश्यादिविषयस्यापि प्रत्यभिज्ञानत्वमुक्तम्। येषान्तु सादृश्यविषयमुपमानाख्यं प्रमाणान्तरं तेषां वैलक्षण्यादिविषयं प्रमाणान्तरमनुषज्येत। तथाचोक्तम्।

उपमानं प्रसिद्धार्थसाधर्म्यात् साध्यसाधनम्।
तद्वैधर्म्यात् प्रमाणं किं स्यात् संज्ञिप्रतिपादनम्॥
इदमल्पं महद्दूरमासन्नं प्रांशु नेति वा।
व्यपेक्षातः समक्षेऽर्थे विकल्पः साधनान्तरम्॥ इति॥ ५॥

एषां क्रमेणोदाहरणं दर्शयन्नाह॥ ६॥

आदिशब्देन—

पयोऽम्बुभेदी हंसः स्यात् षट्पादैर्भ्रमरः स्मृतः।
सप्तपर्णस्तु तत्त्वज्ञैर्विज्ञेयो विषमच्छदः॥
पञ्चवर्णं भवेद्रत्नं मेचकाख्यं पृथुस्तनी।
युवतिश्चैकशृङ्गोऽपि गण्डकः परिकीर्त्तितः॥
शरभोऽप्यष्टभिः पादैः सिंहश्चारुसटान्वितः।

इत्येवमादिशब्दश्रवणात् तथाविधानेव मरालादीनवलोक्य तथा सत्यापयति यदा तदा तत्सङ्कलनमपि प्रत्यभिज्ञानमुक्तं दर्शनस्मरणकारणत्वाविशेषात् परेषान्तु तत्प्रमाणान्तरमेवोपपद्यते। उपमानादौ तस्यान्तर्भावाभावात्॥ ६॥

अथोहोऽवसरप्राप्त इत्याह॥ ७॥

उपलम्भः प्रमाणमात्रमत्र गृह्यते। यदि प्रत्यक्षमेवोपलम्भशब्देनोच्यते तदा साधनेष्वनुमेयेषु व्याप्तिज्ञानं न स्यात्। अथ व्याप्तिः सर्वोपसंहारेण प्रतीयते। सा कथमतीन्द्रियस्य साधनस्यातीन्द्रियेण साध्येन भवेदिति। नैवं प्रत्यक्षविषयेष्विव अनुमानविषयेष्वपि व्याप्तेरविरोधात्। तज्ज्ञानस्याप्रत्यक्षत्वाभ्युपगमात॥ ७॥

उदाहरणमाह॥ ८॥

सुगमम्॥ ८॥

इदानीमनुमानं क्रमायातमिति तल्लक्षणमाह॥ ९॥

साधनस्य लक्षणमाह॥ १०॥

ननु त्रैरूप्यमेव हेतोर्लक्षणं तस्मिन् सत्येव हेतोरसिद्धादिदोषपरिहारोपपत्तेः। तथाहि। पक्षधर्मत्वमसिद्धत्वव्यवच्छेदार्थमभिधीयते। सपक्षे सत्त्वन्तु विरुद्धत्वापनोदार्थम्। विपक्षे चासत्त्वमेवानैकान्तिकव्युदासार्थमिति। तदुक्तम्—

हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः।
असिद्धविपरीतार्थव्यभिचारिविपक्षतः॥

इति। तदयुक्तम्। अविनाभावनियमनिश्चयादेव दोषत्रयपरिहारोपपत्तेः। अविनाभावो ह्यन्यथानुपपन्नत्वम्। तच्चासिद्धस्य न सम्भवत्येव। अन्यथानुपपन्नत्वमसिद्धस्य न सिद्ध्यति इत्यभिधानात्। नापि विरुद्धस्य तल्लक्षणत्वोपपत्तिर्विपरीतनिश्चिताविनाभाविनि यथोक्तसाध्याविनाभावनियमलक्षणस्यानुपपत्तेर्विरोधात् व्यभिचारिण्यपि न प्रकृतलक्षणावकाशस्तत एव ततोऽन्यथानुपपत्तिरेव श्रेयसी न त्रिरूपता। तस्यां सत्यामपि यथोक्तलक्षणाभावे हेतोर्गमकत्वादर्शनात्। तथाहि। स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यत्र त्रैरूप्यसम्भवेऽपि न गमकत्वमुपलभ्यते।

अथ विपक्षाद्व्यावृत्तिर्नियमवती तत्र न दृश्यते। ततो न गमकत्वमिति। तदपि मुग्धविलसितमेव तस्या एवाविनाभावरूपत्वात्। इतररूपसद्भावेऽपि तदभावे हेतोः स्वसाध्यसिद्धिं प्रति गमकत्वानिष्टौ सैव प्रधानं लक्षणमुपलक्षणीयमिति। तत्सद्भावे शेतररूपद्वयनिरपेक्षतया गमकत्वोपपत्तेश्च। यथा सन्त्यद्वैतवादिनोऽपि प्रमाणानीष्टानिष्टसाधनदूषणान्यथानुपपत्तेः। न चात्र पक्षधर्मत्वं सपक्षान्वयो वास्ति। केवलमविनाभावमात्रेण गमकत्वप्रतीतेः।

यदप्यपरमुक्तं परैः पक्षधर्मताभावेऽपि काकस्य कार्ष्ण्यादधवलः प्रासाद इत्यस्यापि

गमकत्वापत्तिरिति। तदप्यनेन निरस्तम्। अन्यथानुपपत्तिबलेनैवापक्षधर्म्मस्यापि साधुत्वाभ्युपगमात्। न चेह सास्ति। ततोऽविनाभाव एव हेतोः प्रधानं लक्षणमभ्युपगन्तव्यम्। तस्मिन् सत्यसति त्रिलक्षणत्वेऽपि हेतोर्गमकत्वदर्शनादिति। न त्रैरूप्यं हेतुलक्षणं अव्यापकत्वात्। सर्व्वेषां क्षणिकत्वे साध्ये सत्त्वादेः साधनस्य सपक्षे असतोऽपि स्वयं सौगतैर्गमकत्वाभ्युपगमात्।

एतेन पञ्चलक्षणत्वमपि यौगपरिकल्पितं न हेतोरुपपत्तिमियर्त्तीत्यभिहितं बोद्धव्यम्। पक्षधर्म्मत्वं सत्यन्वयव्यतिरेकावबाधितविषयत्वमसत्प्रतिपक्षत्वञ्चेति पञ्च लक्षणानि। तेषामप्यविनाभावप्रपञ्चतैव बाधितविषयस्याविनाभावायोगात् सत्प्रतिपक्षस्येवेति। साध्याभावविषयत्वेनासम्यग्हेतुत्वाच्च। यथोक्तपक्षविषयत्वाभावात् तद्दोषेणैव दुष्टत्वात्। अतः स्थितं साध्याविनाभावित्वेन निश्चितो हेतुरिति ॥ १० ॥

इदानीमविनाभावभेदं दर्शयन्नाह ॥ ११ ॥

तत्र सहभावनियमस्य विषयं दर्शयन्नाह ॥ १२ ॥

सहचारिणोरूपरसयोर्व्याप्यव्यापकयोश्च वृक्षत्वशिंशपत्वयोरिति सप्तम्या विषयो निर्दिष्टः ॥ १२ ॥

क्रमभावनियमस्य विषयं दर्शयन्नाह ॥ १३ ॥

पूर्व्वोत्तरचारिणोः कृत्तिकोदयशकटोदययोः कार्य्यकारणयोश्च धूमधूमध्वजयोः क्रमभावः ॥ १३ ॥

नन्वेवम्भूतस्याविनाभावस्य न प्रत्यक्षेण ग्रहणं तस्य सन्निहितविषयत्वात्। नाप्यनुमानेन। प्रकृतापरानुमानकल्पनायां इतरेतराश्रयत्वानवस्थावतारात्। आगमादेरपि भिन्नविषयत्वेन सुप्रसिद्धत्वान्न ततोऽपि तत्प्रतिपत्तिरित्याशङ्कायामाह ॥ १४ ॥

तर्कात् यथोक्तलक्षणादूहात्। तन्निर्णय इति ॥ १४ ॥

अथेदानीं साध्यलक्षणमाह ॥ १५ ॥

अत्रापरे दूषणमाचक्षते। आसनशयनभोजनयाननिधुवनादेरपि इष्टत्वात् तदपि साध्यमनुषज्यते इति। तेऽप्यतिबालिशाः। अप्रस्तुतप्रलापित्वात्। अत्र हि साधनमधिक्रियते। तेन साधनविषयत्वेनेप्सितमिष्टमुच्यते ॥ १५ ॥

इदानीं स्वाभिहितसाध्यलक्षणस्य विशेषणानि सफलयन् असिद्धविशेषणं समर्थयितुमाह ॥ १६ ॥

तत्र सन्दिग्धं स्थाणुर्वा पुरुषो वेत्यनवधारणेनोभयकोटिपरामर्शि संशयाकलितं वस्तूच्यते। विपर्यस्तन्तु विपरीतावभासि विपर्ययज्ञानविषयभूतं रजतादि। अव्युत्पन्नन्तु नामजातिसंख्यादिविशेषापरिज्ञानेन निर्णीतविषयानध्यवसायग्राह्यम्। एषां साध्यत्वप्रतिपादनार्थमसिद्धपदोपादानमित्यर्थः ॥ १६ ॥

अधुनेष्टाबाधितविशेषणद्वयस्य साफल्यं दर्शयन्नाह ॥ १७ ॥

अनिष्टो मीमांसकस्यानित्यः शब्दः। प्रत्यक्षादिबाधितश्चाश्रावणत्वादिः। आदिशब्देनानुमानागमलोकस्ववचनबाधितानां ग्रहणम्। तदुदाहरणञ्चाकिञ्चित्करस्य हेत्वाभासस्य निरूपणावसरे स्वयमेव ग्रन्थकारः प्रपञ्चयिष्यतीत्युपरम्यते ॥ १७ ॥

तत्रासिद्धपदं प्रतिवाद्यपेक्षयैव। इष्टपदन्तु वाद्यपेक्षयेति विशेषमुपदर्शयितुमाह ॥ १८ ॥

अयमर्थो न हि सर्वं सर्वापेक्षया विशेषणमपि तु किञ्चित्कमप्युद्दिश्य भवतीति असिद्धवदिति व्यतिरेकमुखेनोदाहरणम् । यथा असिद्धं प्रतिवाद्यपेक्षया । न वक्त्रपेक्षमित्यर्थः ॥१८॥

कुत एतदित्याह ॥ १९ ॥

इच्छया खलु विषयीकृतमिष्टमुच्यते । प्रत्यायनाय हीच्छा वक्तुरेवेति ॥ १९ ॥

तच्च साध्यं धर्मः किञ्चातद्विशिष्टो धर्मीति प्रश्ने तद्भेदं दर्शयन्नाह ॥ २० ॥

सोपस्काराणि वाक्यानि भवन्ति । ततो ऽयमर्थो लभ्यते । व्याप्तिकालापेक्षया तु साध्यं धर्मः । क्वचित्प्रयोगकालापेक्षया तु तद्विशिष्टो धर्मी साध्यः ॥ २० ॥

अस्यैव धर्मिणो नामान्तरमाह ॥ २१ ॥

ननु धर्मधर्मिसमुदायः पक्ष इति पक्षस्वरूपस्य पुरातनैर्निरूपितत्वात् धर्मिणस्तद्वचने कथं न राद्धान्तविरोध इति । नैवं साध्यधर्माधारतया विशेषितस्य धर्मिणः पक्षत्ववचनेऽपि दोषानवकाशात् । रचनावैचित्र्यमात्रेण तात्पर्यस्यानिराकृतत्वात् सिद्धान्ताविरोधात् ॥ २१ ॥

अत्राह सौगतः । भवतु नाम धर्मी पक्षव्यपदेशभाक् तथापि सविकल्पबुद्धौ परिवर्त्तमान एव । न वास्तवः । सर्वत्र वानुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन न बहिःसदसत्त्वमपेक्षत इत्यभिधानादिति तन्निरासार्थमाह ॥ २२ ॥

अयमर्थः । नेयं विकल्पबुद्धिर्बहिरन्तर्वा नासादितालम्बनभावा धर्मिणं व्यवस्थापयति । तदवास्तवत्वेन तदाधारसाध्यसाधनयोरपि वास्तवत्वानुपपत्तेः तद्बुद्धेः पारम्पर्येणापि वस्तुव्यवस्थानिबन्धनत्वायोगात् । ततो विकल्पेनान्येन वा व्यवस्थापितः पर्वतादिर्विषयभावं भजन्नेव धर्मितां प्रतिपद्यत इति स्थितं प्रसिद्धो धर्मीति । तत्प्रसिद्धिश्च क्वचिद्विकल्पतः क्वचित्प्रमाणतः क्वचिच्चोभयत इति नैकान्तेन विकल्पाधिरूढस्य प्रमाणप्रसिद्धस्य वा धर्मित्वम् ॥ २२ ॥

विकल्पात्प्रतिपत्तौ किं तत्र साध्यमित्याशङ्कायामाह ॥ २३ ॥

तस्मिन् धर्मिणि । ननु धर्मिणो विकल्पसिद्धे सत्ता च तदपेक्षयेतरा सत्ता च ते द्वे अपि साध्ये सुनिश्चितासम्भवद्बाधकप्रमाणबलेन योग्यानुपलब्धिबलेन चेति शेषः ॥ २३ ॥

अत्रोदाहरणमाह ॥ २४ ॥

सुगमम् ॥ २४ ॥

ननु धर्मिण्यसिद्धसत्ताके भावाभावोभयधर्माणां असिद्धविरुद्धानैकान्तिकत्वात् अनुमानविषयत्वायोगात् कथं सत्तेतरयोः साध्यत्वम् । तदुक्तम् ।

असिद्धो भावधर्मश्चेत् व्यभिचार्युभयाश्रितः ।
विरुद्धो धर्मोऽभावस्य सा सत्ता साध्यते कथम् ॥ इति ।

तदयुक्तम् । मानसप्रत्यक्षे भावरूपस्यैव धर्मिणः प्रतिपन्नत्वात् । न च तत्सिद्धौ तत्सत्त्वस्यापि प्रतिपन्नत्वात् व्यर्थमनुमानम् । तदभ्युपेतमपि वैयात्यात् यदा परो न प्रतिपद्यते तदानुमानस्य साफल्यात् । न च मानसज्ञानात् गगनकुसुमादेरपि सद्भावसम्भावनातोऽतिप्रसङ्गः । तस्य बाधकप्रत्ययव्यपाकृतसत्ताकवस्तुविषयतया मानसप्रत्यक्षाभासत्वात् । कथं तर्हि [illegible]रादेर्धर्मित्वमिति न चोद्यं धर्मिप्रयोगकाले बाधकप्रत्ययानुदयात् सत्त्वसम्भावनोपपत्तेः । न च सर्वज्ञादौ बाधकप्रमाणासत्त्वेन सत्त्वं प्रति संशीतिः । सुनिश्चितासम्भवद्बाधकप्रमाणत्वेन सुखादाविव सत्त्वनिश्चयात् । तत्र संशयायोगात् ॥

इदानीं प्रमाणोभयसिद्धे धर्म्मिणि किं साध्यमित्याशङ्कायामाह ॥ २५ ॥

साध्ये इति शब्दः प्राग्द्विवचनान्तोऽप्यर्थवशात् एकवचनान्ततया संबध्यते । प्रमाणञ्चोभयञ्च विकल्प्य प्रमाणद्वयं ताभ्यां सिद्धे धर्म्मिणि साध्यधर्म्मविशिष्टता साध्या । अयमर्थः । प्रमाणप्रतिपन्नमपि वस्तु विशिष्टधर्म्माधारतया विवादपदमारोहतीति साध्यतां नातिवर्त्तत इति । एवमुभयसिद्धेऽपि योज्यम् ॥ २५ ॥

प्रमाणोभयसिद्धं धर्म्मिद्वयं क्रमेण दर्शयन्नाह ॥ २६ ॥

देशो हि प्रत्यक्षेण प्रसिद्धः । शब्दस्तूभयसिद्धः । न हि प्रत्यक्षेणार्वाग्दर्शिभिरनियतदिग्देशकालावच्छिन्नाः सर्वे शब्दा निश्चेतुं पार्य्यन्ते ॥ २६ ॥

सर्वदर्शिनस्तु तन्निश्चयेऽपि तं प्रत्यनुमानानर्थक्यात् प्रयोगकालापेक्षया धर्म्मविशिष्टधर्म्मिणः साध्यत्वमभिधाय व्याप्तिकालापेक्षया साध्यनियमं दर्शयन्नाह ॥ २७ ॥

सुगमम् ॥ २७ ॥

धर्म्मिणोऽपि साध्यत्वे को दोष इत्यत्राह ॥ २८ ॥

उक्तविपर्य्ययेऽन्यथाशब्दः । धर्म्मिणः साध्यत्वे तद्घटनात् । व्याप्त्यघटनादिति हेतुः । न हि धूमदर्शनात् सर्वत्र पर्वतोऽग्निमानिति व्याप्तिः शक्या कर्तुं प्रमाणविरोधात् ॥ २८ ॥

नन्वनुमाने पक्षप्रयोगस्यासम्भवात् प्रसिद्धो धर्म्मीत्यादिवचनमयुक्तम् । तस्य सामर्थ्यालब्धत्वात् । तथापि तद्वचने पुनरुक्तताप्रसङ्गात् । अर्थादापन्नस्यापि पुनर्वचनं पुनरुक्तमित्यभिधानादिति । सौगतस्तत्राह ॥ २९ ॥

साध्यमेव धर्म्मस्तस्याधारस्तत्र सन्देहो महानसादिः पर्वतादिर्वेति तस्यापनोदो व्यवच्छेदस्तदर्थं गम्यमानस्यापि साध्यसाधनयोर्व्याप्यव्यापकभावप्रदर्शनान्यथानुपपत्तेस्तदाधारस्य गम्यमानस्यापि पक्षस्य वचनं प्रयोगः ॥ २९ ॥

अत्रोदाहरणमाह ॥ ३० ॥

साध्येन विशिष्टो धर्म्मी पर्वतादिः तत्र साधनधर्म्मावबोधनाय पक्षधर्म्मोपसंहारवत् । पक्षधर्म्मस्य हेतोरुपसंहार उपनयस्तद्वत् इति । अयमर्थः । साध्यव्याप्तसाधनप्रदर्शनेन तदाधारावगतावपि नियतधर्म्मिसम्बन्धिताप्रदर्शनार्थं यथोपनयस्तथा साध्यस्य विशिष्टधर्म्मिसम्बन्धितावबोधनाय पक्षवचनमपीति ।

किञ्च हेतुप्रयोगेऽपि समर्थनमवश्यं वक्तव्यमसमर्थितस्य हेतुत्वायोगात् । तथा च समर्थनोपन्यासादेव हेतोः सामर्थ्यसिद्धत्वात् हेतुप्रयोगोऽनर्थकः स्यात् । हेतुप्रयोगाभावे कस्य समर्थनमिति चेत् पक्षप्रयोगाभावे क्व हेतुर्वर्त्ततां इति समानमेतत् ॥ ३० ॥

तस्मात् कार्य्यस्वभावानुपलम्भभेदेन पक्षधर्म्मत्वादिभेदेन च त्रिधा हेतुमुक्त्वा समर्थयमानेन पक्षप्रयोगोऽप्यभ्युपगन्तव्य एव । इत्यमुमेवार्थमाह ॥ ३१ ॥

को वा वादी प्रतिवादी चेत्यर्थः । किलार्थे वा शब्दः । युक्त्या पक्षप्रयोगस्यावश्यम्भावे कः किल न पक्षयति पक्षं न करोत्यपि तु करोत्येव । किं कुर्वन् समर्थयमानः । किं कृत्वा हेतुमुक्त्वैव न पुनरनुक्त्वेत्यर्थः । समर्थनं हि हेतोरसिद्धत्वादिदोषपरिहारेण स्वसाध्यसाधनसामर्थ्यप्ररूपणप्रवणं वचनम् । तच्च हेतुप्रयोगोत्तरकालं परेणाङ्गीकृतमित्युक्तेति वचनम् ॥ ३१ ॥

ननु भवतु पक्षप्रयोगस्तथापि पक्षहेतुदृष्टान्तभेदेन त्र्यवयवमनुमानमिति सांख्याः । प्रतिज्ञाहेतूदाहरणोपनयभेदेन चतुरवयवमिति मीमांसकाः । प्रतिज्ञाहेतूदाहरणोपनय-

निगमनभेदात् पञ्चावयवमिति यौगाः। तन्मतमपाकुर्वन् स्वमतसिद्धमवयवद्वयमेव उपदर्शयन्नाह ॥ ३२ ॥

एतयोः पक्षहेत्वोः द्वयमेव नातिरिक्तमित्यर्थः। एवकारेणैवोदाहरणादिव्यवच्छेदे सिद्धेऽपि परमतनिरासार्थं पुनर्नोदाहरणमित्युक्तम् ॥ ३२ ॥

तद्धि किं साध्यप्रतिपत्त्यर्थमुताहोस्वित् हेतोरविनाभावनियमार्थमाहोस्वित् व्याप्तिस्मरणाद्यर्थमिति विकल्पत्रयं क्रमेण दूषयन्नाह ॥ ३३ ॥

तदुदाहरणं साध्यप्रतिपत्तेरङ्गं कारणं नेति सम्बन्धः ॥ ३३ ॥

तत्र साध्यप्रतिपत्तौ यथोक्तस्य साध्याविनाभावित्वेन निश्चितस्य हेतोर्व्यापारादिति द्वितीयविकल्पं शोधयन्नाह ॥ ३४ ॥

तदिति वर्त्तते नेति च तेनायमर्थः। तदुदाहरणं तेन साध्येनाविनाभावनिश्चयार्थं वा न भवतीति विपक्षे बाधकादेव। तत्सिद्धेरविनाभावनिश्चयसिद्धेः ॥ ३४ ॥

किञ्च व्यक्तिरूपं निदर्शनं तत् कथं साकल्येन व्याप्तिं गमयेत्। व्यक्त्यन्तरेषु व्याप्त्यर्थं पुनरुदाहरणान्तरं मृग्यम्। तस्यापि व्यक्तिरूपत्वेन सामान्येन व्याप्तेरवधारयितुमशक्यत्वात्। अपरापरतदन्तरापेक्षायामनवस्था स्यात्। एतदेवाह ॥ ३५ ॥

तत्रापि उदाहरणेऽपि। तद्विप्रतिपत्तौ सामान्यव्याप्तिविप्रतिपत्तावित्यर्थः। शेषं व्याख्यातम् ॥ ३५ ॥

तृतीयविकल्पदूषणमाह ॥ ३६ ॥

गृहीतसम्बन्धस्य हेतुप्रदर्शनेनैव व्याप्तिसिद्धिरगृहीतसम्बन्धस्य दृष्टान्तशतेनापि न तत्स्मरणमनुभूतविषयत्वात् स्मरणस्येति भावः ॥ ३६ ॥

तदेवमुदाहरणप्रयोगस्य साध्यार्थं प्रति नोपयोगित्वं प्रत्युत संशयहेतुत्वमेवेति दर्शयति ॥ ३७ ॥

तदुदाहरणं परं केवलमभिधीयमानम्। साध्यधर्म्मिणि साध्यविशिष्टे धर्म्मिणि। साध्यसाधने सन्देहयति सन्देहवती करोति। दृष्टान्तधर्म्मिणि साध्यव्याप्तसाधनोपदर्शनेऽपि साध्यधर्म्मिणि तन्निर्णयस्य कर्त्तुमशक्यत्वात् इति शेषः ॥ ३७ ॥

अमुमेवार्थं व्यतिरेकमुखेन समर्थयमानः प्राह ॥ ३८ ॥

अन्यथा संशयहेतुत्वाभावे। कस्माद्धेतोरुपनयनिगमने प्रयुज्येते। अपरः प्राह। उपनयनिगमनयोरप्यनुमानाङ्गत्वमेव। तदप्रयोगे निरवयवसाध्यसंवित्तेरयोगादिति ॥ ३८ ॥

तन्निषेधार्थमाह ॥ ३९ ॥

उपनयनिगमने अपि वक्ष्यमाणलक्षणे तस्यानुमानस्याङ्गे न भवतः। साध्यधर्म्मिणि हेतुसाध्ययोः वचनादेवेत्येवकारेण दृष्टान्तादिकमन्तरेणेत्यर्थः ॥ ३९ ॥

किञ्चाभिधायापि दृष्टान्तादिकं समर्थनमवश्यं वक्तव्यम्। असमर्थितस्याहेतुत्वादिति तदेव वरं हेतुरूपमनुमानावयवो वास्तु साध्यसिद्धौ तस्यैवोपयोगात्। नोदाहरणादिकम्। एतदेवाह ॥ ४० ॥

प्रथमो वा-शब्द एव-कारार्थो द्वितीयस्तु पक्षान्तरसूचने। शेषं सुगमम् ॥ ४० ॥

ननु दृष्टान्तादिकमन्तरेण मन्दधियामवबोधयितुमशक्यत्वात् कथं पक्षहेतुप्रयोगमात्रेण तेषां साध्यप्रतिपत्तिरिति तत्राह ॥ ४१ ॥

बालानामल्पप्रज्ञानां व्युत्पत्त्यर्थं तेषामुदाहरणादीनां त्रयोपगमे शास्त्र एवासौ

तत्त्रयोपगमो न वादे। न हि वादकाले शिष्या व्युत्पाद्याः व्युत्पन्नानामेव तत्राधिकारादिति ॥ ४१ ॥

बालव्युत्पत्त्यर्थं तत्त्रयोपगम इत्यादिना शास्त्रेऽभ्युपगतमेवोदाहरणादित्रयमुपदर्शयति ॥ ४२ ॥

दृष्टौ अन्तौ साध्यसाधनलक्षणौ धर्मौ अन्वयमुखेन व्यतिरेकद्वारेण वा यत्र स दृष्टान्त इत्यन्वयसंज्ञाकरणात्। स द्विधैवोपपद्यते ॥ ४२ ॥

तत्रान्वयदृष्टान्तं दर्शयन्नाह ॥ ४३ ॥

साध्येन व्याप्तं नियतं साधनं हेतुर्यत्र प्रदर्श्यते व्याप्तिपूर्वकतयेति भावः ॥ ४३ ॥

द्वितीयभेदमुपदर्शयति ॥ ४४ ॥

असत्सद्भावो व्यतिरेकः। तत्प्रधानो दृष्टान्तो व्यतिरेकदृष्टान्तः। साध्याभावे साधनस्याभाव एवेति सावधारणं द्रष्टव्यम् ॥ ४४ ॥

क्रमप्राप्तमुपनयस्वरूपं निरूपयति ॥ ४५ ॥

पक्षे इत्यध्याहारः। तेनायमर्थः। हेतोः पक्षधर्मतोपसंहार उपनय इति ॥ ४५ ॥

निगमनस्वरूपमुपदर्शयति ॥ ४६ ॥

उपसंहार इति वर्त्तते। प्रतिज्ञाया उपसंहारः साध्यधर्मविशिष्टत्वेन प्रदर्शनं निगमनमित्यर्थः।

ननु शास्त्रे दृष्टान्तादयो वक्तव्या एवेति नियमानभ्युपगमात् कथं तत्त्रयमिह सूरिभिः प्रपञ्चितमिति न चोद्यम्। स्वयमनभ्युपगमेऽपि प्रतिपाद्यानुरोधेन जिनमतानुसारिभिः प्रयोगपरिपाट्याः प्रतिपन्नत्वात्। स च ज्ञाततत्स्वरूपैः कर्त्तुं न शक्यते इति तत्स्वरूपमपि शास्त्रेऽभिधातव्यमेवेति ॥ ४६ ॥

तदेवं मतभेदेन द्वि-त्रि-चतुः-पञ्चावयवरूपमनुमानं द्विप्रकारमेवेति दर्शयन्नाह ॥ ४७ ॥

तद्द्विविधमेवाह ॥ ४८ ॥

स्वपरविप्रतिपत्तिनिरासफलत्वात् द्विविधमेवेति भावः ॥ ४८ ॥

स्वार्थानुमानभेदं दर्शयन्नाह ॥ ४९ ॥

साधनात् साध्यविज्ञानमनुमानमिति प्रागुक्तं लक्षणं यस्य तथोक्तमित्यर्थः ॥ ४९ ॥

द्वितीयमनुमानभेदं दर्शयन्नाह ॥ ५० ॥

तस्य स्वार्थानुमानस्यार्थः साध्यसाधनलक्षणः। तं परामृशतीत्येवंशीलं तदर्थपरामर्शि तच्च तद्वचनञ्च तस्माज्जातमुत्पन्नं विज्ञानं परार्थानुमानमिति ॥ ५० ॥

ननु वचनात्मकं परार्थानुमानं प्रसिद्धं तत् कथं तदर्थप्रतिपादकवचनजनितज्ञानस्य परार्थानुमानत्वमभिदधता न संगृहीतमिति न वाच्यम्। अचेतनस्य साक्षात्प्रमितिहेतुत्वाभावेन निरुपचरितप्रमाणभावाभावात्। मुख्यानुमानहेतुत्वेन तस्योपचरितानुमानव्यपदेशो न वार्यत एव। तदेवोपचरितं परार्थानुमानत्वं तद्वचनस्याचार्य्यः प्राह ॥ ५१ ॥

उपचारो हि मुख्याभावे सति प्रयोजने निमित्ते च प्रवर्त्तते। तत्र वचनस्य परार्थानुमानत्वे निमित्तं तद्धेतुत्वम्। तस्य प्रतिपाद्यानुमानस्य हेतुस्तद्धेतुस्तस्य भावस्तत्त्वम्। तस्मात् निमित्तात् तद्वचनमपि परार्थानुमानप्रतिपादकवचनमपि परार्थानुमानमिति सम्बन्धः। कारणे कार्य्यस्योपचारात्। अथवा, तत्प्रतिपादकानुमानं हेतुर्यस्य तत्तद्धेतुस्तस्य भावस्तत्त्वं ततस्तद्वचनमपि तथेति सम्बन्धः। अस्मिन् पक्षे कार्य्ये कारणस्योपचार इति शेषः। वचन-

स्यानुमानत्वे च प्रयोजनमनुमानावयवाः प्रतिज्ञादय इति शास्त्रे व्यवहार एव । ज्ञानात्मनामंशे तद्व्यवहारस्याशक्यकल्पनत्वात् ॥ ५१ ॥

तदेवं साधनात् साध्यविज्ञानमनुमानमिति अनुमानसामान्यलक्षणम् । तदनुमानं द्वेधेत्यादिना तत्प्रकारञ्च सप्रपञ्चम् अभिधाय साधनमुक्तलक्षणापेक्षयैकमप्यतिसंक्षेपेण भिद्यमानं द्विविधमित्युपदर्शयति ॥ ५२ ॥

सुगममेतत् ॥ ५२ ॥

तत्रोपलब्धिर्विधिसाधिकैवानुपलब्धिः प्रतिषेधसाधिकैवेति परस्य नियमं विघटयन् उपलब्धेरनुपलब्धेश्चाविशेषेण विधिप्रतिषेधसाधनत्वमाह ॥ ५३ ॥

गतार्थमेतत् ॥ ५३ ॥

इदानीमुपलब्धेरपि संक्षेपेण विरुद्धाविरुद्धभेदात् द्वैविध्यमुपदर्शयन्नविरुद्धोपलब्धेर्विधौ साध्ये विस्तरतो भेदमाह ॥ ५४ ॥

पूर्वञ्च उत्तरञ्च सह चेति द्वन्द्वः । पूर्वोत्तरसहा इत्येतेभ्यश्चर इत्यनुकरणनिर्देशः । द्वन्द्वात् परः श्रूयमाणः चरशब्दः प्रत्येकमभिसम्बध्यते । तेनायमर्थः । पूर्वचरोत्तरचरसहचरा इति । पश्चाद्व्याप्यादिभिः सह द्वन्द्वः ॥ ५४ ॥

अत्राह सौगतः । विधिसाधनं द्विविधमेव स्वभावकार्य्यभेदात् । कारणस्य तु कार्य्याविनाभावाभावादलिङ्गत्वम् । नावश्यं कारणानि कार्य्यवन्ति भवन्तीति वचनात् । अप्रतिबद्धसामर्थ्यस्य कार्य्यं प्रतिगमकत्वमित्यपि नोत्तरं सामर्थ्यस्यातीन्द्रियतया विद्यमानस्यापि निश्चेतुमशक्यत्वादिति ।

तदसमीक्षिताभिधानमिति दर्शयितुमाह ॥ ५५ ॥

आस्वाद्यमानाद्धि रसात्तज्जनिका सामग्र्यनुमीयते । ततो रूपानुमानं भवति । प्राक्तनो हि रूपक्षणः सजातीयं रूपक्षणान्तरलक्षणं कार्य्यं कुर्व्वन्नेव विजातीयं रसलक्षणं कार्य्यं करोतीति रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित् कारणं हेतुः । प्राक्तनस्य रूपक्षणस्य सजातीयरूपक्षणान्तराव्यभिचारात् । अन्यथा रससमानकालं रूपप्रतिपत्तेरयोगात् । न ह्यनुकूलमात्रमन्त्यक्षणप्राप्तं वा कारणं लिङ्गमिष्यते । येन मणिमन्त्रादिना सामर्थ्यप्रतिबन्धात् । कारणान्तरवैकल्येन वा कार्य्यव्यभिचारित्वं स्यात् । द्वितीयक्षणे कार्य्यप्रत्यक्षीकरणे नानुमानानर्थक्यं वा कार्य्याविनाभावितया निश्चितस्य विशिष्टकारणस्य पुत्रादेर्लिङ्गत्वेनाङ्गीकरणात् । यत्र सामर्थ्याप्रतिबन्धः कारणान्तरावैकल्यञ्च निश्चीयते तस्यैव लिङ्गत्वं नान्यस्येति नोक्तदोषप्रसङ्गः ॥ ५५ ॥

इदानीं पूर्वोत्तरचरयोः स्वभावकार्य्यकारणेष्वनन्तर्भावात् भेदान्तरत्वमेवेति दर्शयति ॥ ५६ ॥

तादात्म्यसम्बन्धे साध्यसाधनयोः स्वभावहेतावन्तर्भावः । तदुत्पत्तिसम्बन्धे च कार्य्ये कारणे वान्तर्भावो विभाव्यते । न च तदुभयसम्भवः कालव्यवधाने तदनुपलब्धेः । सहभाविनोरेव तादात्म्यसम्भवात् अनन्तरयोरेव पूर्वोत्तरक्षणयोः हेतुफलभावस्य दृष्टत्वात् व्यवहितयोस्तदघटनात् ॥ ५६ ॥

ननु कालव्यवधानेऽपि कार्य्यकारणभावो दृश्यत एव । यथा जाग्रत्प्रबुद्धदशाभाविप्रबोधयोर्मरणारिष्टयोर्व्वेति तत्परिहारार्थमाह ॥ ५७ ॥

सुगममेतत् ॥ ५७ ॥

अत्रैवोपपत्तिमाह ॥ ५८ ॥

हि शब्दो यस्मादर्थे। यस्मात्तस्य कारणस्य भावे कार्य्यस्य भावित्वं तद्भावभावित्वं तच्च तद्व्यापाराश्रितम्। तस्मान्न प्रकृतयोः कार्य्यकारणभाव इत्यर्थः। अयमर्थः। अन्वयव्यतिरेक-समधिगम्यो हि सर्व्वत्र कार्य्यकारणभावः। तौ च कार्य्यं प्रति कारणव्यापारसव्यपेक्षावेवोप-पद्येते कुलालस्येव कलशं प्रति। न चातिव्यवहितेषु तद्व्यापाराश्रितत्वमिति ॥ ५८ ॥

सहचरस्याप्युक्तहेतुष्वन्तर्भावं दर्शयति ॥ ५९ ॥

हेत्वन्तरत्वमिति शेषः। अयमभिप्रायः परस्परपरिहारेणोपलम्भात् तादात्म्यासम्भवात् स्वभावहेतावनन्तर्भावः। सहोत्पादाच्च न कार्य्ये कारणे वेति। न च समानसमयवर्त्तिनोः कार्य्यकारणभावः। सव्येतरगोविषाणवत् कार्य्यकारणयोः प्रतिनियमाभावप्रसङ्गाच्च। तस्माद्धेत्वन्तरत्वमेवेति ॥ ५९ ॥

इदानीं व्याप्यहेतुं क्रमप्राप्तमुदाहरन् उक्तान्वयव्यतिरेकपुरःसरं प्रतिपाद्याशयवशात् प्रतिपादितप्रतिज्ञाद्यवयवपञ्चकं दर्शयति ॥ ६० ॥

स्वोत्पत्तौ अपेक्षितपरव्यापारो हि भावः कृतक उच्यते। तच्च कृतकत्वं न कूटस्थ-नित्यपक्षे नापि क्षणिकपक्षे किन्तु परिणामित्वे सत्येवेत्यग्रे वक्ष्यते ॥ ६० ॥

कार्य्यहेतुमाह ॥ ६१ ॥

कारणहेतुमाह ॥ ६२ ॥

अथ पूर्व्वचरहेतुमाह ॥ ६३ ॥

अथोत्तरचरः ॥ ६४ ॥

अत्रापि मुहूर्त्तात् प्रागिति सम्बन्धनीयम्। तत एव कृत्तिकोदयादेव इत्यर्थः ॥ ६४ ॥

सहचरलिङ्गमाह ॥ ६५ ॥

विरुद्धोपलब्धिमाह ॥ ६६ ॥

प्रतिषेधे साध्ये प्रतिषेध्येन विरुद्धानां सम्बन्धिनस्ते व्याप्यादयस्तेषामुपलब्धय इत्यर्थः। तथेति षोढेति भावः ॥ ६६ ॥

तत्र साध्यविरुद्धव्याप्योपलब्धिमाह ॥ ६७ ॥

शीतस्पर्शप्रतिषेध्येन हि विरुद्धोऽग्निस्तद्व्याप्यमौष्ण्यमिति विरुद्धकार्य्योपलम्भमाह ॥ ६८ ॥

अत्रापि प्रतिषेध्यस्य साध्यस्य शीतस्य स्पर्शविरुद्धोऽग्निस्तस्य कार्य्यं धूम इति विरुद्ध-कारणोपलब्धिमाह ॥ ६९ ॥

सुखविरोधि दुःखं तस्य कारणं हृदयशल्यमिति विरुद्धपूर्व्वचरमाह ॥

शकटोदयविरुद्धो ह्यश्विन्युदयस्तत्पूर्व्वचरो रेवत्युदय इति विरुद्धोत्तरलिङ्गमाह ॥ ७१ ॥

भरण्युदयविरुद्धो हि पुनर्वसूदयः तदुत्तरचरः पुष्योदय इति विरुद्धसहचरमाह ॥ ७२ ॥

परभागाभावस्य विरुद्धस्तद्भावस्तत्सहचरोऽर्वाग्भाव इति अविरुद्धानुपलब्धिभेद-माह ॥ ७३ ॥

स्वभावादिपदानां द्वन्द्वः तेषामनुपलम्भ इति पश्चात् षष्ठीतत्पुरुषः समासः ॥ ७३ ॥

स्वभावानुपलम्भोदाहरणमाह ॥ ७४ ॥

अत्र पिशाचपरमाण्वादिभिर्व्यभिचारपरिहारार्थं उपलब्धिलक्षणप्राप्तत्वे सतीति विशेषणमुन्नेयम् ॥ ७४ ॥

व्यापकानुपलब्धिमाह ॥ ७५ ॥

शिंशपात्वं हि वृक्षत्वेन व्याप्तं तदभावे तद्व्याप्यशिंशपाया अप्यभावः ॥ ७५ ॥

कार्यानुपलब्धिमाह ॥ ७६ ॥

अप्रतिबद्धसामर्थ्यं हि कार्यं प्रत्यनुपहतशक्तिकत्वमुच्यते तदभावश्च कार्यानुप-लम्भादिति ॥ ७६ ॥

कारणानुपलब्धिमाह ॥ ७७ ॥

पूर्वचरानुपलब्धिमाह ॥ ७८ ॥

उत्तरचरानुपलब्धिमाह ॥ ७९ ॥

तत एव कृत्तिकोदयानुपलब्धेरेव ॥ ७९ ॥

सहचरानुपलब्धिः प्राप्तकालेत्याह ॥ ८० ॥

विरुद्धकार्याद्यनुपलब्धिर्विधौ सम्भवतीति प्राचक्षाणस्तद्भेदास्त्रय एवेति तानेव प्रदर्शयितुमाह ॥ ८१ ॥

विरुद्धकार्याद्यनुपलब्धिर्विधौ सम्भवतीति विरुद्धकार्यकारणस्वभावानुपलब्धिरिति तत्र विरुद्धकार्यानुपलब्धिमाह ॥ ८२ ॥

व्याधिविशेषस्य हि विरुद्धस्तदभावस्तस्य कार्यं निरामयचेष्टा तस्यानुपलब्धिरिति विरुद्धकारणानुपलब्धिमाह ॥ ८३ ॥

दुःखविरोधि सुखं तस्य कारणमिष्टसंयोगः तदनुपलब्धिरिति विरुद्धस्वभावानुपलब्धि-माह ॥ ८४ ॥

अनेकान्तात्मकविरोधी नित्याद्येकान्तः। न पुनस्तद्विषयविज्ञानम्। तस्य मिथ्याज्ञान-रूपतयोपलम्भसंभवात्। तस्य स्वरूपमवास्तवाकारस्तस्यानुपलब्धिः ॥ ८४ ॥

ननु च व्यापकविरुद्धकार्यादीनां परम्परया विरोधिकार्यादिलिङ्गानाञ्च बहुलमुप-लम्भसम्भवात्तान्यपि किमिति नाचार्यैरुदाहृतानि इत्याशङ्कायामाह ॥ ८५ ॥

अत्रैवैतेषु कार्यादिष्वित्यर्थः ॥ ८५ ॥

तथैव साधनस्योपलक्षणार्थं उदाहरणद्वयं प्रदर्शयति ॥ ८६ ॥

एतच्च किंचित्कं क्वान्तर्भवतीत्याशंकायामाह ॥ ८७ ॥

अन्तर्भावनीयमिति सम्बन्धः ॥ ८७ ॥

शिवकस्य हि कार्यं छत्रकं तस्य कार्यं स्थासः। इति दृष्टान्तद्वारेण द्वितीयमुदा-हरति ॥ ८८ ॥

मृगक्रीडनस्य हि कारणं मृगस्तस्य विरोधी मृगारिस्तस्य कार्यं तच्छब्दनमिति। इदं यथा विरुद्धकार्योपलब्धावन्तर्भवति तथा प्रकृतमपीत्यर्थः ॥ ८८ ॥

बालव्युत्पत्त्यर्थं पञ्चावयवप्रयोगः इत्युक्तम्। व्युत्पन्नं प्रति कथं प्रयोगनियम इति शङ्कायामाह ॥ ८९ ॥

व्युत्पन्नस्य व्युत्पन्नाय वा प्रयोगः क्रियते इति शेषः। तथोपपत्त्या ८४। साध्ये सत्येव उपपत्तिस्तया अन्यथानुपपत्त्यैव वा अन्यथा साध्याभावे ऽनुपपत्तिस्तया ४। ८९ ॥

तामेवानुमानमुद्रामनूमुद्रयति ॥ ९० ॥

ननु तदतिरिक्तदृष्टान्तादेरपि व्याप्तिप्रतिपत्तावुपयोगित्वात् व्युत्पन्नापेक्षया कथं तद-प्रयोग इत्याह ॥ ९१ ॥

हिशब्दो यस्मादर्थे। यस्माद् यथा व्याप्तिग्रहणं व्याप्तिग्रहणानतिक्रमेणैव हेतुप्रयोगो

विधीयते। सा च तावन्मात्रेण व्युत्पन्नैस्तथोपपत्त्यान्यथानुपपत्त्या वावधार्य्यते। दृष्टान्तादिकमन्तरेणैवेत्यर्थः। यथा दृष्टान्तादेर्व्याप्तिप्रतिपत्तिं प्रत्यनङ्गत्वं तथा प्राक् प्रपञ्चितमिति नेह पुनः प्रपञ्च्यते ॥ ९१ ॥

नापि दृष्टान्तादिप्रयोगः साध्यसिद्धयर्थं फलवानित्याह ॥ ९२ ॥

चकार एवकारार्थे। निश्चितविपक्षासम्भवद्धेतुप्रयोगमात्रेण साध्यसिद्धिरित्यर्थः ॥ ९२ ॥

तेन पक्षप्रयोगोऽपि सफल इति दर्शयन्नाह ॥ ९३ ॥

यतस्तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेण व्याप्तिप्रतिपत्तिस्तेन हेतुना पक्षस्तदाधारसूचनाय साध्यव्याप्तसाधनाधारसूचनाय उक्तः। ततो यदुक्तं परेण —

तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः।
ख्याप्येते विदुषां वाच्यो हेतुरेव हि केवलः ॥

इति तन्निरस्तम्। व्युत्पन्नं प्रति यथोक्तहेतुप्रयोगोऽपि पक्षप्रयोगाभावे साधनस्य नियताधारतानवधारणात् ॥ ९३ ॥

अथानुमानस्वरूपं प्रतिपाद्येदानीं क्रमप्राप्तमागमस्वरूपं निरूपयितुमाह ॥ ९४ ॥

यो यत्रावञ्चकः स तत्राप्तः। आप्तस्य वचनमादिशब्देनाङ्गुल्यादिसंज्ञापरिग्रहः। आप्तवचनम् आदिर्यस्य तत् तथोक्तम्। तन्निबन्धनं यस्यार्थज्ञानस्येति। आप्तशब्दोपादानात् अपौरुषेयत्वव्यवच्छेदः। अर्थज्ञानमित्यनेनान्यापोहज्ञानस्याभिप्रायसूचनस्य च निरासः।

नन्वसम्भवीदं लक्षणम्। शब्दस्य नित्यत्वेनापौरुषेयत्वादाप्तप्रणीतत्वायोगात्। तन्नित्यत्वञ्च तदवयवानां वर्णानां व्यापकत्वान्नित्यत्वाच्च। न च तद्व्यापकत्वमसिद्धम्। एकत्र प्रयुक्तस्य गकारादेः प्रत्यभिज्ञया देशान्तरेऽपि ग्रहणात् स एवायं गकार इति नित्यत्वमपि तथैवावसीयते। कालान्तरेऽपि तस्यैव गकारादेर्निश्चयात्। इतो वा नित्यत्वं शब्दस्य संकेतान्यथानुपपत्तेरिति। तथाहि गृहीतसङ्केतस्य शब्दस्य प्रध्वंसे सत्यगृहीतसङ्केतः शब्द इदानीं अन्यत्र वोपलभ्यते इति तत्कथमर्थप्रत्ययः स्यात्। न चासौ न भवतीति स एवायं शब्दः इति प्रत्यभिज्ञानस्यात्रापि सुलभत्वाच्च।

न च वर्णानां शब्दस्य वा नित्यत्वे सर्वैः सर्वदा श्रवणप्रसङ्गः। सर्वदा तदभिव्यक्तेरसम्भवात्। तदसम्भवश्चाभिव्यञ्जकवायूनां प्रतिनियतत्वात्। न च तेषामनुपपन्नत्वं प्रमाणप्रतिपन्नत्वात्। तथाहि वक्तृमुखनिकटदेशवर्तिभिः स्पर्शनेनाध्यक्षेण व्यञ्जकवायवो गृह्यन्ते। दूरदेशस्थितेन मुखसमीपस्थिततूलचलनादनुमीयते। श्रोतृश्रोत्रदेशे शब्दश्रवणान्यथानुपपत्तेरर्थापत्त्यापि निश्चीयन्ते।

किञ्चोत्पत्तिपक्षेऽपि समानोऽयं दोषः। तथाहि वाय्वाकाशसंयोगादसमवायिकारणादाकाशाच्च समवायिकारणाद्दिग्देशाद्यविभागेन उत्पद्यमानोऽयं शब्दो न सर्वैरनुभूयते। अपि तु नियतदिग्देशस्थैरेव तथाभिव्यज्यमानोऽपि। नाप्यभिव्यक्तिसाङ्कर्य्यं उभयत्रापि समानत्वादेव। तथाहि अन्यैस्ताल्वादिसंयोगै र्यथान्यो वर्णो न क्रियते तथा ध्वन्यन्तरसारिभिस्ताल्वादिभिरन्यो ध्वनिर्नारभ्यते इत्युत्पत्त्यभिव्यक्त्योः समानत्वेनैकत्रैव पर्य्यनुयोगावसर इति सर्वं स्वच्छम्।

माभूद्वर्णानां तदात्मकस्य वा शब्दस्य कौटस्थ्यनित्यत्वं तथाप्यनादिपरम्परायातत्वेन वेदस्य नित्यत्वात् प्रकृतलक्षणस्याव्यापकत्वम्। न च प्रवाहनित्यत्वमप्रमाणकमेवास्येति युक्तं वक्तुमधुना तत्कर्तुरनुपलम्भादतीतानागतयोरपि कालयोस्तदनुमापकस्य लिङ्गस्याभावात्।

तदभावोऽपि सर्वदाप्यतीन्द्रियसाध्यसाधनसम्बन्धस्येन्द्रियप्रत्यक्षत्वायोगात्। प्रत्यक्षप्रतिपन्नमेव हि लिङ्गमनुमानं हि गृहीतसम्बन्धस्यैकदेशसंदर्शनादसन्निकृष्टेऽर्थे बुद्धिरित्यभिधानात्।

नाप्यर्थापत्तिस्तत्सिद्धिरन्यथाभूतस्यार्थस्याभावात् उपमानोपमेययोरप्रत्यक्षत्वाच्च। नाप्युपमानं साधकं केवलमभावप्रमाणमेवावशिष्यते। तच्च तदभावसाधकमिति। न च पुरुषसद्भाववदस्यापि दुःसाध्यत्वात् संशयापत्तिः तदभावसाधकप्रमाणानां सुलभत्वात्। अधुना हि तदभावे प्रत्यक्षमेवातीतानागतयोः कालयोरनुमानं तदभावसाधकमिति। तथा च

अतीतानागतौ कालौ वेदकारविवर्जितौ।
कालशब्दाभिधेयत्वादिदानीन्तनकालवत्॥
वेदस्याध्ययनं सर्वं तदध्ययनपूर्वकम्।
वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा॥

इति। तथापौरुषेयो वेदः अनवच्छिन्नसम्प्रदायत्वे सत्यस्मर्यमाणकर्त्तृकत्वात् आकाशवत्। अर्थापत्तिरपि प्रामाण्यलक्षणस्यार्थस्यानन्यथाभूतस्य दर्शनात् तदभावे निश्चीयते धर्माद्यतीन्द्रियार्थविषयस्य वेदस्यार्वाग्भागदर्शिभिः कर्त्तुमशक्यत्वात् अतीन्द्रियार्थदर्शिनश्चाभावात्। प्रामाण्यमपौरुषेयतामेव कल्पयतीति।

अत्र प्रतिविधीयते। यत्तावदुक्तं वर्णानां व्यापित्वे नित्यत्वे च प्रत्यभिज्ञा प्रमाणमिति तदसत्। प्रत्यभिज्ञायास्तत्र प्रमाणत्वायोगात्। देशान्तरेऽपि तस्यैव वर्णस्य सत्त्वे खण्डशः प्रतिपत्तिः स्यात्। नहि सर्वत्र व्याप्तया वर्त्तमानस्यैकस्मिन् प्रदेशे सामस्त्येन ग्रहणमुपपत्तियुक्तमव्यापकत्वप्रसङ्गात्। घटादेरपि व्यापकत्वप्रसङ्गः। शक्यं हि वक्तुमेवं घटः सर्वगतः चक्षुरादिसन्निधानादनेकत्र देशे प्रतीयते इति।

ननु घटोत्पादकस्य मृत्पिण्डादेरनेकस्योपलम्भादनेकत्वमेव तथा महदणुपरिमाणसम्भवाच्चेति। तच्च वर्णेष्वपि समानं तत्रापि प्रतिनियतताल्वादिकारणकलापस्य तीव्रादिधर्म्मभेदस्य च सम्भवाविरोधात्।

अथ व्यापित्वेऽपि सर्वत्र सर्वात्मना वृत्तिमत्त्वान्न दोषोऽयमिति चेन्न। तथा सति सर्वस्यैकत्वविरोधात्। नहि देशभेदेन युगपत् सर्वात्मना प्रतीयमानस्यैकत्वमुपपद्यते प्रमाणविरोधात्। तथाच प्रयोगः। प्रत्येकं गकारादिवर्णोऽनेक एव युगपद्भिन्नदेशतया तथैव सर्वात्मनोपलभ्यमानत्वात् घटादिवत्। न सामान्येन व्यभिचारः। तस्यापि सदृशपरिणामात्मकस्यानेकत्वात्। नापि पर्वताद्यनेकप्रदेशस्थतया युगपदनेकदेशस्थितपुरुषपरिदृश्यमानेन चन्द्रार्कादिना व्यभिचारः। तस्यातिदविष्ठतयैकदेशस्थितस्यापि भ्रान्तिवशादनेकदेशस्थत्वेन प्रतीतेः। न चाभ्रान्तस्य भ्रान्तेन व्यभिचारकल्पना युक्तेति। नापि जलपात्रप्रतिबिम्बेन तस्यापि चन्द्रार्कादिसन्निधिमपेक्ष्य तथा परिणममानस्यानेकत्वात्। तस्मादनेकप्रदेशे युगपत् सर्वात्मनोपलभ्यमानविषयस्यैकस्य सम्भाव्यमानत्वात् तत्र प्रवर्त्तमानं प्रत्यभिज्ञानं न प्रमाणमिति स्थितम्।

तथा नित्यत्वमपि न प्रत्यभिज्ञानेन निश्चीयत इति। नित्यत्वं हि एकस्यानेकक्षणव्यापित्वम्। तच्चान्तराले सत्तानुपलम्भेन न शक्यते निश्चेतुम्। न तु प्रत्यभिज्ञानबलेनैवान्तराले सत्तासम्भवस्तस्य सादृश्यादपि सम्भवाविरोधात्। न च घटादावप्येवं प्रसङ्गस्तस्योत्पत्तावपरापरमृत्पिण्डान्तरलक्षणस्य कारणस्यासम्भाव्यमानत्वेनान्तराले सत्तायाः साधयितुं शक्यत्वात्। अत्र तु च्छकारणानामपूर्वाणां व्यापारसम्भावनातो नान्तराले सत्तासम्भव इति।

यच्चान्यदुक्तं सङ्केतान्यथानुपपत्तेः शब्दस्य नित्यत्वमिति इदमप्यनात्मज्ञभाषितमेव। अनित्येऽपि योजयितुं शक्यत्वात्। तथाहि गृहीतसङ्केतस्य दण्डस्य प्रध्वंसे सत्यगृहीतसङ्केत इदानीमन्य एव दण्डः समुपलभ्यत इति दण्डीति न स्यात्। तथा धूमस्यापि गृहीतव्याप्तिकस्य नाशे अन्यधूमदर्शनाद्वह्निविज्ञानाभावश्च।

अथ सादृश्यात्तथाप्रतीतौ न दोष इति चेदत्रापि सादृश्यवशादर्थप्रत्यये को दोषो येन नित्यत्वे दुरभिनिवेश आश्रीयते। तथा कल्पनायामन्तराले सत्त्वमप्यदृष्टं न कल्पितं स्यादिति।

यच्चान्यदभिहितं व्यञ्जकानां प्रतिनियतत्वात् न युगपच्छ्रुतिरिति तदप्यशिक्षितलक्षितम्। समानेन्द्रियग्राह्येषु समानधर्मसु समानदेशेषु विषयिविषयेषु नियमायोगात्। तथाहि श्रोत्रं समानदेश-समानेन्द्रियग्राह्य-समानधर्म्मापन्नानामर्थानां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्य्यं न भवति इन्द्रियत्वात् चक्षुर्वत्। शब्दा वा प्रतिनियतसंस्कारकसंस्कार्य्या न भवन्ति। समानदेश-समानेन्द्रियग्राह्य-समानधर्म्मापन्नत्वे सति युगपदिन्द्रियसंबद्धत्वात् घटादिवत्। उत्पत्तिपक्षेऽप्ययं दोषः समान इति न वाच्यं कुम्भकारदीपदृष्टान्ताभ्यां कारकव्यञ्जकपक्षयोर्विशेषसिद्धेरित्यलमतिजल्पितेन॥

यच्चान्यत् प्रवाहनित्यत्वेन वेदस्यापौरुषेयत्वमिति तत्र किं शब्दमात्रस्यानादिनित्यत्वमुत विशिष्टानामिति। आद्ये पक्षे य एव शब्दा लौकिकास्त एव वैदिका इत्यस्यमिदमभिधीयते वेद एवापौरुषेय इति। किन्तु सर्व्वेषामपि शास्त्राणामपौरुषेयतेति।

अथ विशिष्टानुपूर्व्विका एव शब्दा अनादित्वेनाभिधीयन्ते तेषामवगतार्थानां अनवगतार्थानां वा अनादिता स्यात्। यदि तावदुत्तरः पक्षस्तदा ज्ञानलक्षणमप्रामाण्यमनुषज्यते। अथाद्यः पक्ष आश्रीयते तद्व्याख्यातारः किञ्चिज्ज्ञा भवेयुः सर्व्वज्ञा वा। प्रथमपक्षे दुरधिगमसम्बन्धानामन्यथाप्यर्थस्य कल्पयितुं शक्यत्वात् मिथ्यात्वलक्षणमप्रामाण्यं स्यात्। तदुक्तम्।

अयमर्थो नायमर्थ इति शब्दा वदन्ति न।
कल्प्योऽयमर्थः पुरुषैस्ते च रागादिविप्लुताः॥

किञ्च। किञ्चिज्ज्ञव्याख्यातार्थाविशेषादग्निहोत्रं जुहुयात् स्वर्गकाम इत्यस्य खादेच्छ्वमांसमित्यपि वाक्यार्थः किं न स्यात्। संशयलक्षणमप्रामाण्यं वा।

अथ सर्व्वविद्विदितार्थ एव वेदोऽनादिपरम्परायात इति चेत् हन्त धर्म्मे चोदनैव प्रमाणमिति हतमेतत्। अतीन्द्रियार्थप्रत्यक्षीकरणसमर्थस्य पुरुषस्य सद्भावे च तद्वचनस्यापि चोदनावदवबोधकत्वेन प्रामाण्यादेदस्य पुरुषाभावसिद्धेस्तत् प्रतिबन्धकं स्यात्।

अथ तद्व्याख्यातृणां किञ्चिज्ज्ञत्वेपि यथार्थव्याख्यानपरम्परयानवच्छिन्नसन्तानत्वेन सत्यार्थ एव वेदोऽवसीयत इति चेत् न। किञ्चिज्ज्ञानामतीन्द्रियार्थेषु निःसंशयव्याख्यानायोगादन्धेनाकृष्यमाणस्यान्धस्याभिनिष्टदेशपरिहारेणाभिमतपथप्रापणानुपपत्तेः।

किञ्चानादिव्याख्यानपरम्परागतत्वेऽपि वेदार्थस्य गृहीतविस्मृतसम्बन्धवचनाकौशलदुष्टाभिप्रायतया व्याख्यानस्यान्यथैव करणात् अविसंवादायोगादप्रामाण्यमेव स्यात्। दृश्यन्ते ह्यधुनातना अपि ज्योतिःशास्त्रादिषु रहस्यं यथार्थमवयन्तोऽपि दुरभिसन्धेरन्यथा व्याचक्षाणाः केचिज्जानन्तोऽपि वचनाकौशलादन्यथोपदिशन्तः केचिच्च विस्मृतसम्बन्धा अयाथातथ्यमभिदधाना इति। कथमन्यथा भावनाविधिनियोगवाक्यार्थविप्रतिपत्तिर्वेदे स्यात्। मनुयाज्ञवल्क्यादीनां श्रुत्यर्थानुसारिस्मृतिनिरूपणायां वा। तस्मादनादिप्रवाहपतितत्वेऽपि वेदस्यायथार्थत्वमेव स्यादिति स्थितम्।

यथोक्तमतीतानागताविव्यादि तदपि स्वमतनिर्मूलत्वहेतुत्वेन विपरीतसाधनात् तदाभासमेवेति । तथाहि

अतीतानागतौ कालौ वेदार्थज्ञविवर्जितौ ।
कालशब्दाभिधेयत्वादधुनातनकालवत् ॥ इति ॥

किञ्च कालशब्दाभिधेयत्वं अतीतानागतयोः कालयोर्ग्रहणे सति भवति । तद्ग्रहणञ्च नाध्यक्षतस्तयोरतीन्द्रियत्वादनुमानतस्तद्ग्रहणेऽपि न साध्येन सम्बन्धः तयोर्निश्चेतुं पार्य्यते । प्रत्यक्षगृहीतस्यैव तत्सम्बन्धाभ्युपगमात् । न च कालाख्यं द्रव्यं मीमांसकस्यास्ति । प्रसङ्गसाधनाददोष इति चेन्न परं प्रति साध्यसाधनयो र्व्याप्यव्यापकभावाभावात् । इदानीमपि देशान्तरे वेदकारस्याष्टकादेः सौगतादिभिरभ्युपगमात् ।

यदप्यपरं वेदाध्ययनमित्यादि तदपि विपक्षेऽपि समानम् ।

भारताध्ययनं सर्व्वं गुर्व्वध्ययनपूर्व्वकम् ।
तदध्ययनवाच्यत्वादधुनाध्ययनं यथा ॥

इति ॥ यच्चान्यदुक्तमनवच्छिन्नसम्प्रदायत्वे सत्यस्मर्य्यमाणकर्त्तृकत्वादिति । तत्र जीर्णकूपारामादिभिः व्यभिचारनिवृत्तयर्थमनवच्छिन्नसम्प्रदायत्वविशेषणेऽपि विशेष्यस्यास्मर्य्यमाणकर्त्तृकत्वस्य विचार्य्यमाणस्यायोगादसाधनत्वम् । कर्त्तुरस्मरणं हि वादिनः प्रतिवादिनश्च सर्व्वस्य वा वादिनश्चेदनुपलब्धेरभावाद्वा । आद्ये पक्षे पिटकत्रयेऽपि स्यादनुपलब्धेरविशेषात् । तत्र परैः कर्त्तुरङ्गीकरणान्नोनेदत एवात्रापि न तदस्तु । अभावादितिचेदस्मात्तदभावसिद्धावितरेतराश्रयत्वम् । सिद्धे हि तदभावे तन्निबन्धनं तदस्मरणं अस्माच्च तदभाव इति प्रामाण्यान्यथानुपपत्तेस्तदभावान्नेतरेतराश्रयत्वं इति चेन्न । प्रामाण्येनाप्रामाण्यकारणस्यैव पुरुषविशेषस्य निराकरणात् पुरुषमात्रस्यानिराकृतेः ।

अथातीन्द्रियार्थदर्शिनो भावादन्यस्य च प्रामाण्यकारणत्वानुपपत्तेः सिद्ध एव सर्व्वथा पुरुषाभाव इति चेन्न । सर्व्वज्ञाभावो विभाविषः । प्रामाण्यान्यथानुपपत्तेरिति चेदितरेतराश्रयत्वम् । कर्त्तुरस्मरणादिति चेच्चक्रकप्रसङ्गः । अभावप्रमाणादिति चेन्न तत्साधकस्यानुमानस्य प्राक् प्रतिपादितत्वात् अभावप्रमाणोत्थानायोगात् । प्रमाणपञ्चकाभावे भावप्रमाणप्रवृत्तेः ।

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥

इति । परैरभिधानात् । ततो न वादिनः कर्त्तुरस्मरणमुपपन्नं नापि प्रतिवादिनोऽसिद्धेः । तत्र हि प्रतिवादी स्मरतीत्येककर्त्तारमिति । नापि सर्व्वस्य वादिनो वेदे कर्त्तुरस्मरणेऽपि प्रतिवादिनः स्मरणात् ।

ननु प्रतिवादिना वेदेऽष्टकादयो बहवः कर्त्तारः स्मर्य्यन्ते अतस्तत् स्मरणस्य विवादविषयस्याप्रामाण्याद् भवेदेव सर्व्वस्य कर्त्तुरस्मरणमिति चेन्न । कर्त्तुर्विशेषविषय एवासौ विवादो न कर्त्तृसामान्ये । अतः सर्व्वस्य कर्त्तुरस्मरणमप्यसिद्धम् । सर्व्वात्मज्ञानविज्ञानरहितो वा कथं सर्व्वस्य कर्त्तुरस्मरणमवैति । तस्मादपौरुषेयत्वस्य वेदे व्यवस्थापयितुमशक्यत्वान्न तल्लक्षणस्याव्यापकत्वमसम्भवित्वं वा सम्भवति । पौरुषेयत्वे पुनः प्रमाणानि बहूनि सन्त्येव सजन्ममरणर्षिगोत्रचरणादिनामश्रुतेरनेकपदसंहतिप्रतिनियमसंदर्शनात् फलार्थिपुरुषप्रवृत्तिविनिवृत्तिहेत्वात्मनां श्रुतेश्च मनुसूत्रवत् पुरुषकर्त्तृकैव श्रुतिरिति वचनात् । अपौरुषेयत्वेऽपि वा न प्रामाण्यं वेदस्योपपद्यते तद्धेतूनां गुणानामभावात् ।

ननु न गुणकृतमेव प्रामाण्यं किन्तु दोषाभावप्रकारेणापि। स च दोषाश्रयपुरुषाभावेऽपि निश्चीयते न गुणसद्भाव एवेति। तथाचोक्तम्।

शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितम्।
तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः॥
तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसम्भवात्।
यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः॥

इति। तदप्ययुक्तं पराभिप्रायापरिज्ञानात्। नास्माभिर्वक्तुरभावे वेदस्य प्रामाण्याभावः समुद्भाव्यते किन्तु तद्व्याख्यातॄणां अतीन्द्रियार्थदर्शनादिगुणाभावे ततो दोषाणामनपोहितत्वात् न प्रामाण्यनिश्चय इति। ततो पौरुषेयत्वेऽपि वेदस्य प्रामाण्यनिश्चयायोगात् नानेन लक्षणस्याव्यापित्वमसम्भवित्वं वा। इत्यलमतिजल्पितेन॥ ९४॥

ननु शब्दार्थयोः सम्बन्धाभावादन्यापोहमात्राभिधायित्वादाप्तप्रणीतादपि शब्दात् कथं वस्तुभूतार्थावगम इत्यत्राह॥ ९५॥

सहजा स्वभावभूता योग्यता शब्दार्थयो वाच्यवाचकशक्तिस्तस्यां सङ्केतस्तद्वशात् विस्फुटं शब्दादयः प्रागुक्ता वस्तुप्रतिपत्तिहेतव इति॥ ९५॥

उदाहरणमाह॥ ९६॥

ननु यएव शब्दाः सत्यर्थे दृष्टास्त एवार्थाभावेऽपि दृश्यन्ते तत् कथमर्थाभिधायकत्वमिति। तदप्ययुक्तमनर्थकेभ्यः शब्देभ्योऽर्थवतामन्यत्वात्। न चान्यस्य व्यभिचारेऽन्यस्यासौ युक्तोऽतिप्रसङ्गात्। अन्यथा गोपालघटिकान्तर्गतस्य धूमस्य पावकस्य व्यभिचारे पर्वतादिधूमस्यापि तत्प्रसङ्गात्। यत्नतः परीक्षितं कार्य्यं कारणं नातिवर्त्तते इत्यन्यत्रापि समानम्। सुपरीक्षितो हि शब्दोऽर्थं न व्यभिचरतीति। तथाचान्यापोहस्य शब्दार्थत्वकल्पनं प्रयासमात्रमेव। न चान्यापोहः शब्दार्थो व्यवतिष्ठते प्रतीतिविरोधात्। न हि गवादिशब्दश्रवणादगवादिव्यावृत्तिः प्रतीयते। ततः सास्नादिमत्यपदार्थे प्रवृत्तिदर्शनादगवादिबुद्धिजनकं तत्र शब्दान्तरं मृग्यम्।

अथैकस्मादेव गोशब्दादर्थद्वयस्यापि सम्भावनान्नार्थः शब्दान्तरेणेति चेन्नैवमेकस्य परस्परविरुद्धार्थद्वयप्रतिपादनविरोधात्।

किञ्च गोशब्दस्यागोव्यावृत्तिविषयत्वे प्रथममगौरिति प्रतीयेत। न चैवमतो नान्यापोहः शब्दार्थः। किञ्चापोहाख्यं सामान्यं वाच्यत्वेन प्रतीयमानं पर्य्युदासरूपं प्रसज्यरूपं वा। प्रथमपक्षे गोत्वमेव नामान्तरेणोक्तं स्यादभावाभावस्य भावान्तरस्वभावेन व्यवस्थितत्वात्।

कश्चायमश्वादिनिवृत्तिलक्षणो भावोऽभिधीयते न तावत् स्वलक्षणरूपस्तस्य सकलविकल्प-वाग्गोचरातिक्रान्तत्वात्। नापि शावलेयादिव्यक्तिरूपः तस्यासामान्यत्वप्रसङ्गात्। तस्मात् सकलगोव्यक्तिष्वनुवृत्तप्रत्ययजनकं तत्रैव प्रत्येकं परिसमाप्तया वर्त्तमानं सामान्यमेव गोशब्दवाच्यम्। तस्यापोह इति नामकरणे नाममात्रं भिद्येत नार्थ इति। अतो नाद्यः पक्षः श्रेयान्। नापि द्वितीयो गोशब्दादेः क्वचिद्वाह्येऽर्थे प्रवृत्त्ययोगात् तुच्छाभावाभ्युपगमे परमतप्रवेशानुषङ्गाच्च।

किञ्च गवादयो ये सामान्यशब्दा ये च शावलेयादयः तेषां भवदभिप्रायेण पर्य्यायता स्यादर्थभेदाभावाद् वृक्षपादपादिशब्दवत्। न खलु तुच्छाभावस्य भेदो युक्तो वस्तुन्येव

संयग्रत्वैकत्वनानात्वादिविकल्पानां प्रतीतेः। भेदे वा अभावस्य वस्तुतापत्तिस्तल्लक्षणत्वा-द्वस्तुत्वस्य। न चापोह्यलक्षणसम्बन्धिभेदाद्भेदः। प्रमेयाभिधेयादिशब्दानामप्रवृत्ति-प्रसङ्गात्। व्यवच्छेद्यस्यातद्रूपेणापि अप्रमेयादिरूपत्वे ततो व्यवच्छेदायोगात् कथन्तत्र सम्बन्धिभेदाद्भेदः।

किञ्च शावलेयादिविवेकोऽपोहो न प्रसज्येत किन्तु प्रतिव्यक्तिभिन्न एव स्यात्। शाव-लेयादयस्तन्न भिन्दन्ति तद्वदश्वादयोऽपि भेदका मा भूवन् यथान्तरङ्गाः शावलेयादयो न भेद-कास्तथाश्वादयो भेदका इत्यतिसाहसम्। वस्तुनोऽपि सम्बन्धिभेदाद्भेदो नोपलभ्यते किमुतावस्तुनि। तथाह्येक एव देवदत्तादिः कटककुण्डलादिभिरभिसम्बध्यमानो न नानात्वमास्तिघ्नुवानः समुपलभ्यते इति।

भवतु वा सम्बन्धिभेदाद्भेदः तथापि न वस्तुभूतसामान्यमन्तरेणान्यापोहाश्रयः सम्बन्धो भवतां भवितुमर्हतीति। तथाहि यदि शावलेयादिषु वस्तुभूतसारूप्याभावोऽश्वादिपरिहारेण तत्रैव विशिष्टाभिधानप्रत्ययौ कथं स्याताम्। ततः सम्बन्धिभेदाद्भेदमिच्छतापि सामान्यं वास्तवमङ्गीकर्त्तव्यमिति।

किञ्चापोहशब्दार्थपक्षे सङ्केत एवानुपपन्नः तद्ग्रहणोपायासम्भवात् न प्रत्यक्षं तद्-ग्रहणसमर्थं तस्य वस्तुविषयत्वादन्यापोहस्य चावस्तुत्वात्। अनुमानमपि न तत्सद्भावमवबो-धयति तस्य कार्यस्वभावलिङ्गसम्पाद्यत्वात्। अपोहस्य निरुपाख्यत्वेनानर्थक्रियाकारित्वेन च स्वभावकार्ययोरसम्भवात्।

किञ्च गोशब्दस्यागोऽपोहाभिधायित्वे गौरित्यत्र गोशब्दस्य किमभिधेयं स्यात् अज्ञा-तस्य विधिनिषेधयोरनधिकारात्। अगोनिवृत्तिरिति चेदितरेतराश्रयत्वम् अगोव्यवच्छेदो हि अगोनिश्चये भवति। स चागौ गोनिवृत्त्यात्मा गौश्चागोव्यवच्छेदरूप इति। अगौरि-त्यत्रोत्तरपदार्थोऽप्यनयैव दिशा चिन्तनीयः।

नन्वगौरित्यत्रान्य एव विधिरूपो गोशब्दाभिधेयस्तदापोहः शब्दार्थ इति विघटेत तस्मादपोहस्योक्तयुक्त्या विचार्यमाणस्यायोगान्नान्यापोहः शब्दार्थ इति स्थितं सहजयोग्यता-वशात्छब्दादयो वस्तुप्रतिपत्तिहेतव इति॥

स्मृतिरनुपहतेयं प्रत्यभिज्ञानवद्धा
प्रमितिनिरतचिन्ता लैङ्गिकं सङ्गतार्थम्।
प्रवचनमनवद्यं निश्चितं देववाचा
रचितमुचितवाग्भिस्तथ्यमेतेन गीतम्॥ ९६॥

इति परीक्षामुखस्य लघुवृत्तौ परोक्षप्रपञ्चः तृतीयः समुद्देशः॥ ३॥

---

अथ स्वरूपसंख्याविप्रतिपत्तिं निराकृत्य विषयविप्रतिपत्तिनिरासार्थमाह॥ १॥

तस्य प्रमाणस्य ग्राह्योऽर्थो विषय इति यावत्। स एव विशिष्यते। सामान्यविशेषा-त्मा। सामान्यविशेषौ वक्ष्यमाणलक्षणौ तावात्मानौ यस्येति विग्रहः। तदुभयग्रहणमात्म-ग्रहणञ्च केवलस्य सामान्यस्य विशेषस्य तदुभयस्य वा स्वतन्त्रस्य प्रमाणविषयत्वप्रतिषेधार्थम्। तत्र सन्मात्रदेहस्य परमब्रह्मणो निरस्तत्वात् तदितरद्विचार्यते। तत्र सांख्यैः प्रधानं सामान्यमुक्तम्।

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥

इति वचनात् । तच्च केवलं प्रधानं महदादिकार्य्यनिष्पादनाय प्रवर्त्तमानं किमप्यपेक्ष्य प्रवर्त्तते निरपेक्षं वा । प्रथमपक्षे तन्निमित्तं वाच्यं यदपेक्ष्य प्रवर्त्तते ।

ननु पुरुषार्थ एव तत्र कारणं पुरुषार्थेन हेतुना प्रधानं प्रवर्त्तते । पुरुषार्थश्च द्विधा । शब्दाद्युपलब्धिर्गुणपुरुषान्तरविवेकदर्शनञ्चेत्यभिधानादिति चेत् सत्यं तथा प्रवर्त्तमानमपि बहुधानेकं पुरुषकृतं कञ्चिदुपकारं समासादयत् प्रवर्त्तेतानासादयद्वा । प्रथमपक्षे स उपकारस्तस्माद्भिन्नोऽभिन्नो वा । यदि भिन्नस्तदा तस्येति व्यपदेशाभावः सम्बन्धाभावात् तदभावश्च समवायादेरनभ्युपगमात् । तादात्म्यस्य भेदविरोधीति ।

अथाभिन्न उपकार इति पक्ष आश्रीयते तदा प्रधानमेव तेन कृतं स्यात् ।

अथोपकारनिरपेक्षमेव प्रधानं प्रवर्त्तते तर्हि मुक्तात्मानं प्रत्यपि प्रवर्त्तेताविशेषात् । एतेन निरपेक्षप्रवृत्तिपक्षोऽपि प्रत्युक्तः स्यात एव ।

किञ्च सिद्धे प्रधाने सर्व्वमेतदुपपन्नं स्यात् । न च तत्सिद्धिः कुतश्चिन्निश्चीयत इति ।

ननु कार्य्याणामेकान्वयदर्शनात् एककारणप्रभवत्वं भेदानां परिणामदर्शनाच्चेति तदप्यचारुचर्चितम् । सुखदुःखमोहरूपतया घटादेरन्वयाभावादन्तस्तत्त्वस्यैव तथोपलम्भात् ।

अथान्तस्तत्त्वस्य न सुखादिपरिणामः किन्तु तथा परिणममानप्रधानसंसर्गात् आत्मनोऽपि तथाप्रतिभास इति तदप्यनुपपन्नम् । अप्रतिभासमानस्यापि संसर्गकल्पनायां तत्त्वेयत्ताया निश्चेतुमशक्तेः । तदुक्तम् ।

संसर्गादविभागश्चेदयोगोलकवह्निवत् ।
भेदाभेदव्यवस्थैवमुच्छिन्ना सर्व्ववस्तुषु ॥ इति ।

यदपि परिमाणाख्यं साधनं तदप्येकप्रकृतिकेषु घटघटीशरावोदञ्चनादिषु अनेकप्रकृतिकेषु पटकुटमुकुटशकटादिषु चोपलम्भात् अनैकान्तिकमिति न ततः प्रकृतिसिद्धिः ।

तदेवं प्रधानग्रहणोपायासम्भवात् संभवे वा ततः कार्य्योदयायोगाच्च यदुक्तं परेण ।

प्रकृतेर्महांस्ततोऽहङ्कारः तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥

इति सृष्टिक्रमो — मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

इति स्वरूपाख्यानञ्च वन्ध्यासुतसौरूप्यवर्णनमिवासद्विषयत्वादुपेक्षामर्हति । अमूर्त्तस्याकाशस्य पृथिव्यादेश्चैककारणकत्वायोगाच्च । अन्यथा अचेतनादपि पञ्चभूतकदम्बकाच्चैतन्यसिद्धिश्चार्व्वाकमतसिद्धिप्रसङ्गात् सांख्यगन्ध एव न स्यात् ।

सत्कार्य्यवादप्रतिषेधश्चान्यत्र विस्तरेणोक्त इति नेहोच्यते संक्षेपरूपत्वादस्येति । तथा विशेषा एव तत्त्वं तेषामसमानैव विशेषेभ्योऽशेषात्मना विश्लेषात्मकत्वात् सामान्यस्यैकस्यानेकत्र व्याप्त्या वर्त्तमानस्य सम्भवाभावाच्च । तस्यैकव्यक्तिनिष्ठस्य सामस्त्येनोपलब्धस्य तदैव व्यक्त्यन्तरेऽनुपलम्भप्रसङ्गात् उपलम्भे वा तन्नानात्वापत्तेर्युगपद्भिन्नदेशतया सामस्त्येनोपलब्धेः तद्व्यक्तिवदन्यथा व्यक्तयोऽपि भिन्ना माभूवन्निति । ततो बुद्ध्यभेद एव सामान्यम् । तदुक्तम् ।

एकत्र दृष्टो भावो हि क्वचिन्नान्यत्र दृश्यते ।
तस्मान्न भिन्नमस्त्यन्यत् सामान्यं बुद्ध्यभेदतः ॥ इति ॥

ते च विशेषाः परस्परासम्बद्धा एव तत्सम्बन्धस्य विचार्य्यमाणस्यायोगात् । एकदेशेन सम्बन्धे अणुषट्केन युगपद्योगादणोः षडंशतापत्तेः सर्व्वात्मनाभिसम्बन्धे पिण्डस्याणुमात्रत्वापत्तेः । अवयविनिषेधाच्च सम्बन्धत्वमेषामनुपपन्नतरमेव तन्निषेधश्च वृत्तिविकल्पादिबाधनात् । तथाहि अवयवा अवयविनि वर्त्तन्त इति नाभ्युपगतम् । अवयवी चावयवेषु वर्त्तमानः किमेकदेशेन वर्त्तते सर्व्वात्मना वा । एकदेशेन वृत्तावयवान्तरप्रसङ्गस्तत्रापि एकदेशान्तरेणावयविनो वृत्तावनवस्था । सर्व्वात्मना वर्त्तमानोऽपि प्रत्यवयवं स्वभावभेदेन वर्त्तेताहोस्विदेकरूपेणेति । प्रथमपक्षे अवयविबहुत्वप्रसक्तिः । द्वितीयपक्षे तु अवयवानामेकरूपत्वापत्तिरिति प्रत्येकं परिसमाप्त्या वृत्तावप्यवयविबहुत्वमिति । तथा यद्दृश्यं सन्नोपलभ्यते तन्नास्त्येव यथा गगनेन्दीवरम् । नोपलभ्यते चावयवेषु अवयवीति । तथा यदग्रहे यद्बुद्ध्यभावः तत्ततो नार्थान्तरं यथा वृक्षाग्रहे वनमिति । ततश्च निरंशा एवान्योन्यासंस्पर्शिनो रूपादिपरमाणवः । ते चैकक्षणस्थायिनो न नित्याः विनाशं प्रत्यन्यानपेक्षणात् । प्रयोगश्च यो यद्भावं प्रत्यन्यानपेक्षः स तत्स्वभावनियतो यथान्त्या कारणसामग्री । स्वकार्य्यनाशो हि मुद्गरादिना क्रियमाणस्ततो भिन्नो वा क्रियते । भिन्नस्य करणे घटस्य स्थितिरेव स्यात् ।

अथ विनाशसम्बन्धान्नष्ट इति व्यपदेश इति चेत् भावाभावयोः कः सम्बन्धः । न तावत्तादात्म्यं तयोर्भेदात् । नापि तदुत्पत्तिरभावस्य कार्य्याधारत्वाघटनात् । अभिन्नस्य करणे घटादिरेव कृतः स्यात्स च प्रागेव निष्पन्नत्वाद्व्यर्थं करणमित्यन्यानपेक्षत्वं सिद्धमिति विनाशस्वभावनियतत्वं साधयत्येव । सिद्धे चानित्यानां तत्स्वभावनियतत्वे तदितरेषामात्मादीनां विमत्यधिकरणभावापन्नानां सत्त्वादिना साधनेन तद्दृष्टान्तात् भवत्येव क्षणस्थितिस्वभावत्वम् । तथाहि यत् सत् तत् सर्व्वं एकक्षणस्थितिस्वभावं यथा घटः । सन्तश्चामी भावा इति ।

अथवा सत्त्वमेव विपक्षे बाधकप्रमाणबलेन दृष्टान्तनिरपेक्षमशेषस्य वस्तुनः क्षणिकत्वमुपपादयति । तथाहि सत्त्वमर्थक्रियया व्याप्तमर्थक्रिया च क्रमयौगपद्याभ्यां ते च नित्यान्निवर्त्तमाने स्वव्याप्यामर्थक्रियामादाय निवर्त्तते सापि स्वव्याप्यं सत्त्वमिति नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् सत्त्वासम्भवनं विपक्षे बाधकप्रमाणमिति । नहि नित्यस्य क्रमेण युगपद्वा सा सम्भवति । नित्यस्यैकेनैव स्वभावेन पूर्व्वापरकालभाविकार्य्यद्वयं कुर्व्वतः कार्य्याभेदकत्वात् तस्यैकस्वभावत्वात् ।

तथापि कार्य्यनानात्वे अन्यत्र कार्य्यभेदात् कारणभेदकल्पना विफलैव स्यात् । तादृशमेकमेव किञ्चित् कारणं कल्पनीयं येनैकस्वभावेन एकेनैव चराचरमुत्पद्यते इति ।

अथ स्वभावनानात्वमेव तस्य कार्य्यभेदादिष्यत इति चेत्तर्हि ते स्वभावास्तस्य सर्व्वदा सम्भविनः तदा कार्य्यसाङ्कर्य्यं नोचेत्तदुत्पत्तिकारणं वाच्यम् । तस्मादेव नित्यैकस्वभावात् तदुत्पत्तौ तत्स्वभावानां सदा सम्भवात् सैव कार्य्याणां युगपत्प्राप्तिः । सहकारिक्रमापेक्षया तत्स्वभावानां क्रमेण भावान्नोक्तदोष इति चेत्तदपि न साधुसङ्गतम् । नित्यस्य समर्थस्य परापेक्षायोगात् । तैः सामर्थ्यकरणे नित्यताहानिः ।

तस्मात् भिन्नमेव सामर्थ्यं तैर्विधीयत इति न नित्यताहानिरिति चेत्तर्हि नित्यमकिञ्चित्करमेव स्यात् । सहकारिजनितसामर्थ्यस्यैव कार्य्यकारित्वात् तत्सम्बन्धात् तस्यापि

कार्य्यकारित्वे तत्स्वभावस्यैकस्यैकस्वभावत्वे सामर्थ्यनानात्वाभावान्न कार्य्यभेदः । अनेकस्वभावत्वे-ऽक्रमवत्त्वे च कार्य्यवत् तस्यापि याकृर्य्यमिति सर्व्वमावर्त्तते इति चक्रकप्रसङ्गः ।

तस्मान्न क्रमेण कार्य्यकारित्वं नित्यस्य । नापि युगपदशेषकार्य्याणां युगपदुत्पत्तौ द्वितीयक्षणे कार्य्याकरणादनर्थक्रियाकारित्वेनावस्तुत्वप्रसङ्गादिति नित्यस्य क्रमयौगपद्या-भावः सिद्ध एवेति सौगताः प्रतिपेदिरे । तेऽपि न युक्तवादिनः । सजातीयेतरव्यावृत्तात्मनां विशेषाणामनंशानां, ग्राहकस्य प्रमाणस्याभावात् प्रत्यक्षस्य स्थिरस्थूलसाधारणाकारवस्तु-ग्राहकत्वेन निरंशवस्तुग्रहणायोगात् । न हि परमाणवः परस्परासम्बन्धाश्चक्षुरादिबुद्धौ प्रतिभान्ति तथासत्यविवादप्रसङ्गात् ।

अथानुभूयन्त एव प्रथमं तथाभूताः क्षणाः पश्चात्तु विकल्पवासनाबलादान्तरादन्तराला-नुपलम्भलक्षणाद्बाह्याच्चाविद्यमानोऽपि स्थूलाद्याकारो विकल्पबुद्धौ चकास्ति स च तदाकारे-णानुरज्यमानः स्वव्यापारं तिरस्कृत्य प्रत्यक्षव्यापारपुरःसरत्वेन प्रवृत्तत्वात् प्रत्यक्षायत इति । तदप्यतिबालविलसितम् । निर्विकल्पकबोधस्यानुपलक्षणात् । गृहीते हि निर्विकल्पके तयो-र्भेदे अन्याकारानुरागस्यान्यत्रकल्पना युक्ता स्फटिकजपाकुसुमयोरिव नान्यथेति ।

एतेन तयोः युगपद्वृत्तेर्लघुवृत्तेर्वा त्तैरेकत्वाध्यवसाय इति निरस्तम् । तस्यापि कोश-पानप्रत्येयत्वादिति । केन वा तयोरेकत्वाध्यवसायो न तावद्विकल्पेन तस्याविकल्पवार्त्तान-भिज्ञत्वात् । नाप्यनुभवेन तस्य विकल्पागोचरत्वात् । न च तदुभयाविषयं तदेकत्वाध्यव-साये समर्थमतिप्रसङ्गात् । ततो न प्रत्यक्षबुद्धौ तथाविधविशेषावभासः । नाप्यनुमानबुद्धौ तदविनाभूतस्वभावकार्य्यलिङ्गाभावादनुपलम्भोऽसिद्ध, एवानुवृत्ताकारस्य स्थूलाकारस्य चोप-लब्धेरुक्तत्वात् ।

यदपि परमाणूनामेकदेशेन सर्व्वात्मना वा सम्बन्धो नोपपद्यत इति तत्रानभ्युपगम एव परिहारः । स्निग्धरूक्षाणां सजातीयानाञ्च द्व्यधिकगुणानां कथञ्चित् स्कन्धाकारपरि-णामात्मकस्य सम्बन्धस्याभ्युपगमात् । यच्चावयविनिवृत्तिविकल्पादिबाधकमुक्तं तत्रावयविनो वृत्तिरेव यदि नोपपद्यते तदा न वर्त्तत इत्यभिधातव्यम् । नैकदेशादिविकल्पस्तस्य विशेषा-न्तरीयकत्वात् । तथाहि नैकदेशेन वर्त्तते नापि सर्व्वात्मनेत्युक्ते प्रकारान्तरेण वृत्तिरित्यभि-हितं स्यात् अन्यथा न वर्त्तत इत्येव वक्तव्यम् । इति विशेषप्रतिषेधस्य शेषाभ्यनुज्ञानरूप-त्वात् कथञ्चित् तादात्म्यरूपेण वृत्तिरित्यवसीयते । तत्र यथोक्तदोषाणामनवकाशात् । विरोधादिदोषश्चाग्रे प्रतिषेत्स्यत इति नेह प्रतन्यते ।

यच्चैकक्षणस्थायित्वे साधनं "यो यद्भावं प्रति" इत्याद्युक्तं तदप्यसाधनम् । असि-द्धादिदोषदुष्टत्वात् । तत्रान्यानपेक्षत्वं तावदसिद्धं घटाद्यभावस्य मुद्गरादिव्यापारान्वय-व्यतिरेकानुविधायित्वात् तत्कारणत्वोपपत्तेः । कपालादिपर्य्यायान्तरभावो हि घटादे-रभावस्तुच्छाभावस्य सकलप्रमाणगोचरातिक्रान्तत्वात् ।

किञ्चाभावो यदि स्वतन्त्रो भवेत् तदान्यानपेक्षत्वं विशेषणं युक्तम् । न च सौगतमते सोऽस्ति इति हेतुप्रयोगानवतार एवानैकान्तिकञ्चेदं शालिबीजस्य कोद्रवाङ्कुरजननं प्रत्यन्या-नपेक्षत्वेऽपि तज्जननस्वभावानियतत्वात् तत्स्वभावत्वे सति इति विशेषणान्न दोष इति चेन्न । सर्व्वथा पदार्थानां विनाशस्वभावासिद्धेः । पर्य्यायरूपेणैव हि भावानामुत्पाद-विनाशावङ्गीक्रियेते । न द्रव्यरूपेण समुदेति विलयमृच्छति भावो नियमेन पर्य्यायेण यस्य नोदेति नो विनश्यति भावनया लिङ्गितो नित्यं इति वचनात् ।

न हि निरन्वयविनाशे पूर्व्वक्षणस्य ततो मृतात् शिखिनः केकायितस्येव उत्तरक्षणस्योत्पत्तिर्घटते द्रव्यरूपेण कथञ्चिदत्यक्तरूपस्यापि सम्भवात् । न सर्व्वथा भावानां विनाशस्वभावत्वं युक्तम् । न च द्रव्यरूपस्य ग्रहीतुमशक्यत्वादभावः तद्ग्रहणोपायस्य प्रत्यभिज्ञानस्य बहुलमुपलम्भात् तत्प्रामाण्यस्य च प्रागेवोक्तत्वात् उत्तरकार्य्योत्पत्तेरन्यथानुपपत्तेश्च सिद्धत्वात् ।

यच्चान्यत् साधनं सत्त्वाख्यं तदपि विपक्षवत् सपक्षेऽपि समानत्वात् न साध्यसिद्धिनिबन्धनम् । तथाहि सत्त्वमर्थक्रियया व्याप्तमर्थक्रिया च क्रमयौगपद्याभ्यां ते च क्षणिकान्निवर्त्तमाने स्वव्याप्यामर्थक्रियामादाय निवर्त्तेते सा च निवर्त्तमाना स्वव्याप्यं सत्त्वमिति नित्यस्येव क्षणिकस्यापि खरविषाणवदसत्त्वमिति न तत्र सत्त्वव्यवस्था ।

न च क्षणिकस्य वस्तुनः क्रमयौगपद्याभ्याम् अर्थक्रियाविरोधोऽसिद्धस्तस्य देशकृतस्य कालकृतस्य वा क्रमस्यासम्भवात् । अवस्थितस्यैकस्य हि नानादेशकालकलाव्यापित्वं देशक्रमः कालक्रमश्चाभिधीयते । न च क्षणिके सोऽस्ति ।

यो यत्रैव स तत्रैव यो यदैव तदैव सः ।
न देशकालयोर्व्याप्तिर्भावानामिह विद्यते ॥

इति स्वयमभिधानात् ।

न च पूर्व्वोत्तरक्षणानां एकसन्तानापेक्षया क्रमः सम्भवति । सन्तानस्य वास्तवत्वेन तस्यापि क्षणिकत्वेन क्रमायोगात् । अक्षणिकत्वेऽपि वास्तवत्वे तेनैव सत्त्वादिसाधनमनैकान्तिकम् । अवास्तवत्वेन तदपेक्षः क्रमो युक्त इति । नापि यौगपद्येन तत्रार्थक्रिया सम्भवति युगपदेकेन स्वभावेन नानाकार्य्यकरणे तत्कार्य्यैकत्वं स्यान्नानास्वभावकल्पनायां ते स्वभावास्तेन व्यापनीयास्तत्रैकेन स्वभावेन तद्व्याप्तौ तेषामेकस्वरूपता नानास्वभावेन चेदनवस्था ।

अथैकत्रैकस्योपादानभाव एवान्यत्र सहकारिभाव इति न स्वभावभेद इष्यते । तर्हि नित्यस्यैकरूपस्यापि वस्तुनः क्रमेण नानाकार्य्यकारिणः स्वभावभेदः कार्य्यसाङ्कर्य्यं मा भूत् अक्रमात् क्रमिणामनुत्पत्तेर्नैवमिति चेत् एकानंशकारणात् युगपदनेककारणसाध्यानेककार्य्यविरोधादक्रमिणोऽपि न क्षणिकस्य कार्य्यकारित्वमिति ।

किञ्च भवत्पक्षे सतोऽसतो वा कार्य्यकारित्वम् । सतः कार्य्यकर्त्तृत्वे सकलकालकलाव्यापिक्षणानामेकक्षणवृत्तिप्रसङ्गः । द्वितीयपक्षे खरविषाणादेरपि कार्य्यकारित्वम् असत्त्वाविशेषात् सत्त्वलक्षणस्य व्यभिचारश्च । तस्मान्न विशेषैकान्तपक्षः श्रेयान् । नापि सामान्यविशेषौ परस्परानपेक्षाविति यौगमतमपि युक्तियुक्तमवभाति । तयोरन्योन्यभेदे द्वयोरन्यतरस्यापि व्यवस्थापयितुमशक्तेः । तथाहि विशेषास्तावत् द्रव्यगुणकर्म्मात्मानः सामान्यन्तु परापरभेदाद् द्विविधम् । तत्र परसामान्यात् सत्तालक्षणाद्विशेषाणां भेदेऽसत्त्वापत्तिरिति । तथाच प्रयोगः । द्रव्यगुणकर्म्माण्यसद्रूपाणि सत्त्वादत्यन्तं भिन्नत्वात् प्रागभावादिवदिति न सामान्यविशेषसमवायैर्व्यभिचारः । तत्र स्वरूपसत्त्वस्याभिन्नस्य परैरभ्युपगमात् ।

ननु द्रव्यादीनां प्रमाणोपपन्नत्वे धर्म्मिग्राहकप्रमाणबाधितो हेतुर्येन हि प्रमाणेन द्रव्यादयो निश्चीयन्ते तेन तत्सत्त्वमपीति ।

अथ न प्रमाणप्रतिपन्ना द्रव्यादयः तर्हि हेतोराश्रयासिद्धिरिति तदयुक्तम् । प्रसङ्गसाधनात् प्रागभावादौ हि सत्त्वाद्भेदोऽसत्त्वेन व्याप्त उपलभ्यते । ततश्च व्याप्यस्य द्रव्यादावभ्युपगमो व्यापकाभ्युपगमनान्तरीयक इति प्रसङ्गसाधने अस्य दोषस्याभावात् । एतेन द्रव्यादीना-

मप्यद्रव्यादित्वं द्रव्यत्वादेर्भेदे चिन्तितं बोद्धव्यम् । कथं वा षण्णां पदार्थानां परस्परं भेदे प्रतिनियतस्वरूपव्यवस्था । द्रव्यस्य हि द्रव्यमिति व्यपदेशस्य द्रव्यत्वाभिसम्बन्धाद्विधाने ततः पूर्वं द्रव्यस्वरूपं किञ्चिद्वाच्यं येन सह द्रव्यत्वाभिसम्बन्धः स्यात् । द्रव्यमेव स्वरूपमिति चेत् न तद्व्यपदेशस्य द्रव्यत्वाभिसम्बन्धनिबन्धनतया स्वरूपस्याधीनात् । सत्त्वं निजं रूपमिति चेत् न । तस्यापि सत्तासम्बन्धादेव तद्व्यपदेशकरणात् । एवं गुणादिष्वपि वाच्यम् । केवलं सामान्यविशेषसमवायानामेव स्वरूपसत्त्वेन तथा व्यपदेशोपपत्तेः तत्त्रयव्यवस्थैव स्यात् ।

ननु जीवादिपदार्थानां सामान्यविशेषात्मकत्वं स्याद्वादिभिरभिधीयते । तयोश्च वस्तुनो भेदाभेदाविति । तौ च विरोधादिदोषोपनिपातात् नैकत्र सम्भाविनाविति । तथा हि भेदाभेदयो र्विधिप्रतिषेधयोरेकत्राभिन्ने वस्तुन्यसम्भवः शीतोष्णस्पर्शयोरिवेति । भेदस्यान्यदधिकरणमभेदस्यान्यदिति वैयधिकरण्यम् । यमात्मानं पुरोधाय भेदो यञ्च समाश्रित्याभेदः तावात्मानौ भिन्नौ चाभिन्नौ च । तत्रापि तथा परिकल्पनादनवस्था येन रूपेण भेदः तेन भेदश्चाभेदश्चेति सङ्करः । येन भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः । भेदाभेदात्मकत्वे च वस्तुनोऽसाधारणाकारेण निश्चेतुमशक्तेः संशयस्ततश्चाप्रतिपत्तिः ततोऽभावः । इत्यनेकान्तात्मकमपि न सौख्यमाभजतीति केचित् ।

तेऽपि न प्रतीतिकवादिनः । विरोधस्य प्रतीयमानयोरसम्भवात् । अनुपलम्भसाध्यो हि विरोधस्तत्रोपलभ्यमानयोः को विरोधः । यच्च शीतोष्णस्पर्शयोरिवेति दृष्टान्तस्योक्तं तच्च धूपदहनाद्येकावयविनः शीतोष्णस्पर्शस्वभावस्योपलब्धेरयुक्तमेव । एकस्य चलाचलरक्तारक्तावृतानावृतादिविरुद्धधर्म्माणां युगपदुपलब्धेश्च प्रकृतयोरपि न विरोध इति । एतेन वैयधिकरण्यमप्यपास्तम् । तयोरेकाधिकरणत्वेन प्रतीतेः । अत्रापि प्रागुक्तनिदर्शनान्येव बोद्धव्यानि ।

यच्चानवस्थानं दूषणं तदपि स्याद्वादिमतानभिज्ञैरेवापादितम् । तन्मतं हि सामान्यविशेषात्मके वस्तुनि सामान्यविशेषावेव भेदः । भेदध्वनिना तयोरेवाभिधानात् द्रव्यरूपेणाभेद इति । द्रव्यमेवाभेदः । एकानेकात्मकत्वाद्वस्तुनः ।

यदि वा भेदनयप्राधान्येन वस्तुधर्म्माणामानन्त्यान्नानवस्था । तथाहि यत् सामान्यं यश्च विशेषः तयोरनुवृत्तव्यावृत्ताकारेण भेदस्तयोश्चार्थक्रियाभेदात् तद्भेदश्च शक्तिभेदात् सोऽपि सहकारिभेदादित्यनन्तधर्म्माणामङ्गीकरणात् कुतोऽनवस्था । तथाचोक्तम् —

मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् ।
वस्त्वानन्त्येऽप्यशक्तौ च नानवस्थापि वार्य्यते ॥ इति ।

यौ च सङ्करव्यतिकरौ तावपि मेचकज्ञाननिदर्शनेन सामान्यविशेषदृष्टान्तेन च परिहृतौ ।

अथ तत्र तथाप्रतिभासनं परस्यापि वस्तुनि तथैव प्रतिभासोऽस्तु तस्य पक्षपाताभावात् । निर्णीते संशयोऽपि न युक्तः । तस्य चलितप्रतिपत्तिरूपत्वात् अचलितप्रतिभासे दुर्घटत्वात् । प्रतिपन्ने वस्तुन्यप्रतिपत्तिरित्यतिसाहसम् । उपलब्ध्यभिधानादनुपलम्भोऽपि न सिद्धस्ततो नाभाव इति दृष्टेष्टाविरुद्धमनेकान्तशासनं सिद्धम् । एतेनावयवावयविनोर्गुणगुणिनोः कर्म्मतद्वतोश्च कथञ्चिद्भेदाभेदौ प्रतिपादितौ बोद्धव्यौ ।

अथ समवायवशाद्भिन्नेष्वपि अभेदप्रतीतिरनुत्पन्नप्रत्याख्यानस्येति चेन्न । तस्यापि ततो भिन्नस्य व्यवस्थापयितुमशक्तेः । तथाहि, समवायवृत्तिः स्वसमवायिषु वृत्तिमती स्यादवृत्तिमती वा । वृत्तिमत्त्वे स्वेनैव वृत्त्यन्तरेण वा । न तावदाद्यः पक्षः समवायान-

भ्युपगमात्। पञ्चानां समवायित्वमिति वचनात्। वृत्त्यन्तरकल्पनायां तदपि स्वसम्बन्धिषु वर्त्तते न वेति कल्पनायां वृत्त्यन्तरपरम्पराप्राप्तेरनवस्था। वृत्त्यन्तरस्य स्वसम्बन्धिषु वृत्त्यन्तरानभ्युपगमात् नानवस्थेति चेत् तर्हि समवायेऽपि वृत्त्यन्तरं माभूत्।

अथ समवायो न स्वाश्रयवृत्तिरङ्गीक्रियते। तर्हि षण्णामाश्रितत्वमिति ग्रन्थो विरुध्यते।

अथ समवायिषु सत्स्वेव समवायप्रतीतेस्तस्याश्रितत्वमुपचर्यते। तर्हि मूर्त्तद्रव्येषु सत्स्वेव दिग्लिङ्गस्येदमतः पूर्व्वेण इत्यादिज्ञानस्य काललिङ्गस्य च परापरादिप्रत्ययस्य सद्भावात् तयोरपि तदाश्रितत्वं स्यात्। तथाचायुक्तमेतत् अन्यत्र नित्यद्रव्येभ्य इति।

किञ्च समवायस्यानाश्रितत्वे सम्बन्धरूपतैव न घटते। तथा च प्रयोगः समवायो न सम्बन्धः अनाश्रितत्वात् दिगादिवदिति।

अत्र समवायस्य धर्म्मिणः कथञ्चित्तादात्म्यरूपस्यानेकस्य च परैः प्रतिपन्नत्वात् धर्म्मिग्राहकप्रमाणबाधा आश्रयासिद्धिश्च न वाच्येति। तस्याश्रितत्वेऽप्येतदभिधीयते। न समवाय एकः सम्बन्धात्मकत्वे सत्याश्रितत्वात् संयोगवत्। सत्तयानेकान्त इति सम्बन्धविशेषणम्।

अथ संयोगे निविडशिथिलादिप्रत्ययनानात्वात् नानात्वं नान्यत्र विपर्ययादिति चेत् न। समवायेऽप्युत्पत्तिमत्त्वनश्वरत्वप्रत्ययनानात्वस्य सुलभत्वात्। सम्बन्धिभेदाद्भेदोऽन्यत्रापि समान इति नैकत्रैव पर्य्यनुयोगो युक्तः। तस्मात् समवायस्य परपरिकल्पितस्य विचारासहत्वात् न तद्वशात् गुणगुण्यादिष्वभेदप्रतीतिः।

अथ भिन्नप्रतिभासादवयवावयव्यादीनां भेद एवेति चेन्न। भेदप्रतीतिभासस्याभेदाविरोधात्। घटपटादीनामपि कथञ्चिदभेदोपपत्तेः सर्व्वथा प्रतिभासभेदस्यासिद्धेश्च। इदमित्याद्यभेदप्रतिभासस्यापि भावात्। ततः कथञ्चित् भेदाभेदात्मकं द्रव्यपर्य्यायात्मकं सामान्यविशेषात्मकञ्च तत्त्वं तीरादर्शिशकुनिन्यायादायातम्। इत्यलमतिप्रसङ्गेन ॥ १ ॥

इदानीमनेकान्तात्मकवस्तुसमर्थनार्थमेव हेतुद्वयमाह ॥ २ ॥

अनुवृत्ताकारो हि गौर्गौरित्यादिप्रत्ययः। व्यावृत्ताकारः श्यामः शबल इत्यादिप्रत्ययः। तयोर्गोचरस्तस्य भावस्तत्त्वं तस्मात्।

एतेन तिर्य्यक्सामान्यव्यतिरेकलक्षणविशेषद्वयात्मकं वस्तु साधितम्। पूर्व्वोत्तराकारयोर्यथासंख्येन परिहारावाप्तिभ्यां स्थितिः सैव लक्षणं यस्य स चासौ परिणामश्च। तेनार्थक्रियोपपत्तेरित्यनेन तूर्द्ध्वतासामान्यपर्य्यायाख्यविशेषद्वयरूपं वस्तु समर्थितं भवति ॥ २ ॥

अथ प्रथमोद्दिष्टसामान्यभेदं दर्शयन्नाह ॥ ३ ॥

प्रथमभेदं सोदाहरणमाह ॥ ४ ॥

नित्यैकरूपस्य गोत्वादेः क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्। प्रत्येकं परिसमाप्त्या व्यक्तिषु वृत्त्ययोगाच्चानेकसदृशपरिणामात्मकमेवेति तिर्य्यक्सामान्यमुक्तम् ॥ ४ ॥

द्वितीयभेदमपि सदृष्टान्तमुपदर्शयति ॥ ५ ॥

सामान्यमिति वर्त्तते। तेनायमर्थः। ऊर्द्ध्वतासामान्यं भवति। किन्तद्द्रव्यं तदेव विशिष्यते। परापरविवर्त्तव्यापीति। पूर्व्वापरकालवर्त्ति त्रिकालानुयायीत्यर्थः। चित्रज्ञानस्यैकस्य युगपद्भाव्यनेकस्वभावनीलाद्याकारव्याप्तिवदेकस्य क्रमभाविपरिणामव्यापित्वमित्यर्थः ॥ ५ ॥

विशेषमपि द्विविधमुपदर्शयति ॥ ५ ॥

बुद्ध्येत्यधिक्रियमाणेनाभिसम्बन्धः ॥ ६ ॥

तदेव प्रतिपादयति ॥ ७ ॥

प्रथमविशेषभेदमाह ॥ ८ ॥

अत्रात्मद्रव्यं स्वदेहप्रमितिमात्रमेव । न व्यापकं नापि वटकणिकामात्रम् । न च कायाकारपरिणतभूतकदम्बकमिति । तत्र व्यापकत्वे परेषामनुमानम् । आत्मा व्यापकः द्रव्यत्वे सत्यमूर्त्तत्वात् आकाशवदिति । तत्र यदि रूपादिलक्षणं मूर्त्तत्वं तत्प्रतिषेधो मूर्त्तत्वं तदा मनसानेकान्तः ।

अथासर्व्वगतद्रव्यपरिमाणं मूर्त्तत्वं तन्निषेधस्तथा चेत् परं प्रति साध्यसमो हेतुः ।

यच्चापरमनुमानं आत्मा व्यापकः अणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वात् आकाशवदिति । तदपि न साधु साधनम् । अणुपरिमाणानधिकरणत्वमित्यत्र किमयं नञर्थः पर्य्युदासः प्रसज्यो वा भवेत् । तत्राद्यपक्षेऽणुपरिमाणप्रतिषेधेन, महापरिमाणमवान्तरं-परिमाणं परिमाणमात्रं वा । महापरिमाणं चेत् साध्यसमो हेतुः । अवान्तरपरिमाणञ्चेत् विरुद्धो हेतुः । अवान्तरपरिमाणाधिकरणत्वं ह्यव्यापकत्वमेव, साधयतीति परिमाणमात्रं चेत् तत्परिमाणसामान्यमङ्गीकर्त्तव्यम् । तथाचाणुपरिमाणप्रतिषेधेन परिमाणसामान्याधिकरणत्वमात्मन इत्युक्तम् । तच्चानुपपन्नम् व्यधिकरणासिद्धिप्रसङ्गात् । न हि परिमाणसामान्यमात्मनि व्यवस्थितं किन्तु परिमाणव्यक्तिष्वेवेति । न चावान्तरमहापरिमाणाधारतयात्मन्यप्रतिपन्ने परिमाणमात्राधिकरणता तत्र निश्चेतुं शक्या । दृष्टान्तश्च साधनविकलः । आकाशस्य महापरिमाणाधिकरणतया परिमाणमात्राधिकरणत्वायोगात् ।

नित्यद्रव्यत्वञ्च सर्व्वथा सिद्धम् । नित्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधादिति । प्रसज्यपक्षेऽपि तुच्छाभावस्य ग्रहणोपायासम्भवात् न विशेषणत्वम् । न चागृहीतविशेषणं नाम नागृहीतविशेषणा विशेष्ये बुद्धिरिति वचनात् । न च प्रत्यक्षं तद्ग्रहणोपायः सम्बन्धाभावात् । इन्द्रियार्थसन्निकर्षजं हि प्रत्यक्षं तन्मते प्रसिद्धम् । विशेषणविशेष्यभावकल्पनायाम् अभावस्य नागृहीतस्य विशेषणत्वमिति तदेव दूषणम् ।

तस्मान्न व्यापकमात्मद्रव्यम् । नापि वटकणिकामात्रम् । कमनीयकान्ताकुचजघनसंस्पर्शकाले प्रतिलोमकूपमाह्लादमाकारस्य सुखस्यानुभवात् । अन्यथा सर्व्वाङ्गीणरोमाञ्चादिकार्य्योदयायोगादाशुवृत्त्यालातचक्रवत् क्रमेणैव तत्सुखमित्यनुपपन्नम् ।

परम्परातः कारणसम्बन्धस्य तत्कारणस्य परिकल्पनायां व्यवधानप्रसङ्गात् । अन्यथा सुखस्य मानसप्रत्यक्षत्वायोगादिति ।

नापि पृथिव्यादिचतुष्टयात्मकत्वमात्मनः सम्भाव्यते । अचेतनेभ्यः चैतन्योत्पत्त्ययोगात् । धात्वो द्रवोष्णताजननान्वयाभावाच्च । तदहर्जातबालकस्य स्तनादावभिलाषाभावप्रसङ्गाच्च ।

अभिलाषो हि प्रत्यभिज्ञाने भवति । तच्च स्मरणे स्मरणञ्चानुभवे भवतीति पूर्व्वानुभवः सिद्धः । मध्यदशायां तथैव व्याप्तेः भूतानां रक्षोयक्षादिकुलेषु स्वयमुत्पन्नत्वेन कथयतां दर्शनात् ।

बोधाच्चिद्भवस्मृतेरुपलम्भाभ्यासादिसन्ततेः सिद्ध एव । तथाचोक्तम् ।

तदहर्जस्तनेहातो रक्षोदृष्टे र्भवस्मृतेः ।
भूतानन्वयनात् सिद्धः प्रकृतिज्ञः सनातनः ॥ इति ।

न च स्वदेहप्रमितिरात्मेत्यत्रापि प्रमाणाभावात् सर्वत्र संशयः इति वक्तव्यम् । तत्रानुमानस्य सद्भावात् । तथाहि । देवदत्तात्मा तद्देह एव तत्र सर्वत्रैव च विद्यते तत्रैव तत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलम्भात् । यो यत्रैव यत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यते स तत्रैव तत्र सर्वत्रैव च विद्यते । यथा देवदत्तगृह एव तत्र सर्वत्रैव च उपलभ्यमानः स्वासाधारणभास्वरत्वादिगुणः प्रदीपः । तथा चायं आत्मेति । तदसाधारणगुणा ज्ञानदर्शनसुखवीर्यलक्षणास्ते च सर्वाङ्गीणास्तत्रैव चोपलभ्यन्ते ।

सुखमाह्लादनाकारं विज्ञानं मेयबोधनम् ।
शक्तिः क्रियानुमेया स्याद् यूनः कान्तासमागमे ॥

इति वचनात् ।

तस्मादात्मा स्वदेहप्रमितिरेव स्थितः ॥ ८ ॥
द्वितीयं विशेषभेदमाह ॥ ९ ॥

वैसादृश्यं हि प्रतियोगिग्रहणे सत्येव भवति । न चापेक्षिकत्वादस्यावस्तुत्वम् अवस्तुन्यापेक्षिकत्वायोगात् । अपेक्षाया वस्तुनिष्ठत्वात् ॥ ९ ॥

स्यात्कारलाञ्छितमबाध्यमनन्तधर्म्म-
सन्दोहवर्म्मितमशेषमपि प्रमेयम् ।
देवैः प्रमाणबलतो निरचायि तच्च
संक्षिप्तमेव मुनिभि र्विवृतं मयैतत् ॥

इति परीक्षामुखस्य लघुवृत्तौ विषयसमुद्देशश्चतुर्थः ॥ ० ॥

---

अथेदानीं फलविप्रतिपत्तिनिरासार्थमाह ॥ १ ॥

द्विविधं हि फलं साक्षात् पारम्पर्येणेति । साक्षादज्ञाननिवृत्तिः पारम्पर्येण हानादिकमिति । प्रमेयनिश्चयोत्तरकालभावित्वात्तस्येति ॥ १ ॥

तद्द्विविधमपि फलं प्रमाणाद्भिन्नमेवेति यौगाः । अभिन्नमेवेति सौगताः । तन्मतद्वयनिरासेन स्वमतं व्यवस्थापयितुमाह ॥ २ ॥

कथञ्चिदभेदसमर्थनार्थं हेतुमाह ॥ ३ ॥

अयमर्थो यस्यैवात्मनः प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेदः । करणक्रियापरिणामभेदाद्भेदः । इत्यस्य सामर्थ्यसिद्धत्वान्नोक्तम् ।

पारम्पर्येण साक्षाच्च फलं द्वेधाभिधायि यत् ।
देवैर्भिन्नमभिन्नञ्च प्रमाणात्तदिहोदितम् ॥ ३ ॥

इति परीक्षामुखलघुवृत्तौ फलसमुद्देशः पञ्चमः ॥ ० ॥

---

अथेदानीमुक्तप्रमाणस्वरूपादिचतुष्टयाभासमाह ॥ १ ॥

ततः उक्तात् प्रमाणस्वरूपसंख्याविषयफलभेदादन्यत् विपरीतं तदाभासमिति ॥ १ ॥

तत्र क्रमप्राप्तं स्वरूपाभासं दर्शयति ॥ २ ॥

अस्वसंविदितञ्च गृहीतार्थं च दर्शनञ्च संशय आदिर्येषां ते संशयादयश्चेति सर्वेषां द्वन्द्वः। आदिशब्देन विपर्ययानध्यवसाययोरपि ग्रहणम्। तत्रास्वसंविदितं ज्ञानं ज्ञानान्तरप्रत्यक्षत्वादिति नैयायिकाः। तथाहि ज्ञानं स्वव्यतिरिक्तवेदनवेद्यं वेद्यत्वात् घटवत् इति। तदसङ्गतम्। धर्मिज्ञानस्य ज्ञानान्तरवेद्यत्वे साध्यान्तःपातित्वेन धर्मित्वायोगात्। स्वसंविदितत्वे तेनैव हेतोरनैकान्तात्। महेश्वरज्ञानेन च व्यभिचाराद्ग्राहिज्ञानेनाप्यनेकान्तादर्थप्रतिपत्त्ययोगाच्च।

न हि ज्ञापकमप्रत्यक्षं ज्ञाप्यं गमयति अक्षलिङ्गादीनामपि तथैव गमकत्वप्रसङ्गात्। अनन्तरभाविज्ञानग्राह्यत्वे तस्याप्यगृहीतस्य पराज्ञापकत्वात् तदन्तरं कल्पनीयम्। तत्रापि तदन्तरमित्यनवस्था। तस्मान्नायं पक्षः श्रेयान्।

एतेन करणज्ञानस्य परोक्षत्वेनास्वसंविदितत्वं ब्रुवन्नपि मीमांसकः प्रत्युक्तः। तस्यापि ततोऽर्थप्रत्यक्षत्वायोगादर्थकर्मत्वेनाप्रतीयमानत्वात्। अप्रत्यक्षं तर्हि फलज्ञानस्याप्रत्यक्षता तत एव स्यात्।

अथ फलत्वेन प्रतिभासनान्नेति चेत् करणज्ञानस्यापि करणत्वेनावभासनात् प्रत्यक्षत्वमस्तु। तस्मादर्थप्रतिपत्त्यन्यथानुपपत्तेः करणज्ञानकल्पनावदर्थप्रत्यक्षत्वान्यथानुपपत्त्या ज्ञानस्यापि प्रत्यक्षत्वमस्तु।

अथ करणस्य चक्षुरादेरप्रत्यक्षत्वेऽपि रूपप्राकट्याद्व्यभिचार इति चेन्न। भिन्नकर्तृकरणस्यैव तद्व्यभिचारादभिन्नकर्तृके करणे सति कर्तृप्रत्यक्षतायां तदभिन्नस्यापि करणस्य कथञ्चित् प्रत्यक्षत्वेनाप्रत्यक्षतैकान्तविरोधात्। एकात्मनोऽप्रत्यक्षत्वे प्रदीपप्रत्यक्षत्वविरोधवदिति।

गृहीतग्राहिधारावाहिज्ञानं गृहीतार्थं दर्शनं सौगताभिमतम्। निर्विकल्पकं तच्च स्वविषयानुपदर्शकत्वात् अप्रमाणम्। व्यवसायस्यैव तज्जनितस्य तदुपदर्शकत्वादर्थव्यवसायस्य प्रत्यक्षाकारेणानुरक्तत्वात्। ततः प्रत्यक्षस्यैव प्रामाण्यम्। व्यवसायस्तु गृहीतग्राहित्वात् अप्रमाणमिति। तन्न सुभाषितम्। दर्शनस्याविकल्पकस्यानुपलक्षणात्। तत्सद्भावायोगात् सद्भावे वा नीलादाविव क्षणक्षयादावपि तदुपदर्शकत्वप्रसङ्गात्। तत्र विपरीतसमारोपान्नेति चेत् तर्हि सिद्धं नीलादौ समारोपविरोधिग्रहणलक्षणो निश्चय इति। तदात्मकस्यैव प्रमाणं तदाभासमिति। संशयादयश्च प्रसिद्धा एव। तत्र संशयः उभयकोटिसंस्पर्शी स्थाणुर्वा पुरुषो वेति परामर्शः। विपर्ययः पुनरतस्मिंस्तदिति विकल्पः। विशेषानवधारणमनध्यवसायः ॥ २ ॥

कथमेषामस्वसंविदितादीनां तदाभासतेत्याह ॥ ३ ॥

गतार्थमेतत् ॥ ३ ॥

अत्र दृष्टान्तं यथाक्रममाह ॥ ४ ॥

पुरुषान्तरञ्च पूर्वार्थश्च गच्छत्तृणस्पर्शश्च स्थाणुपुरुषादिश्च तेषां ज्ञानं तदिव तद्वत् ॥ ४ ॥

अपरञ्च सन्निकर्षवादिनं प्रति दृष्टान्तमाह ॥ ५ ॥

अयमर्थः । यथा चक्षूरसयोः संयुक्तसमवायः सन्नपि न प्रमाणं तथा चक्षूरूपयोरपि । तस्मादयमपि प्रमाणाभास एवेति । उपलक्षणमेतत् । अंशिव्याप्तिकथनमव्याप्तिश्च । सन्निकर्षप्रत्यक्षवादिनां चक्षुषि सन्निकर्षस्यासंभवात् ।

अथ चक्षुः प्राप्तार्थपरिच्छेदकं व्यवहितार्थाप्रकाशकत्वात् प्रदीपवदिति तत्सिद्धिरिति मतम् । तदपि न साधीयः । काचाभ्रपटलादिव्यवहितार्थानामपि चक्षुषा प्रतिभासनात् हेतोरसिद्धेः । शाखाचन्द्रमसोरेककालदर्शनानुपपत्तिप्रसक्तेश्च । न च तत्र क्रमेऽपि यौगपद्याभिमान इति वक्तव्यम् । कालव्यवधानानुपलब्धेः ।

किञ्च क्रमप्रतिपत्तिः प्राप्तिनिश्चये सति भवति न च क्रमप्राप्तौ प्रमाणान्तरमस्ति । तैजसत्वमस्तीति चेन्न तस्यासिद्धेः ।

अथ चक्षुस्तैजसं रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात् प्रदीपवदिति । तदपि अपर्यालोचिताभिधानम् । मरकतमणिप्रभाञ्जनादेः पार्थिवत्वेऽपि रूपप्रकाशकत्वदर्शनात् । पृथिव्यादिरूपप्रकाशकत्वे पृथिव्याद्यारब्धत्वप्रसङ्गाच्च । तस्मात् सन्निकर्षस्याव्यापकत्वान्न प्रमाणत्वम् ॥ करणज्ञानेनाव्यवधानाच्चेति ॥ ५ ॥

प्रत्यक्षाभासमाह ॥ ६ ॥

परोक्षाभासमाह ॥ ७ ॥

प्राक् प्रपञ्चितमेतत् ॥ ७ ॥

परोक्षभेदाभासमुपदर्शयन् प्रथमं क्रमप्राप्तं स्मरणाभासमाह ॥ ८ ॥

अतस्मिन्ननुभूत इत्यर्थः । शेषं सुगमम् ॥ ८ ॥

प्रत्यभिज्ञानाभासमाह ॥ ९ ॥

द्विविधं प्रत्यभिज्ञानाभासमुपदर्शितम् । एकत्वनिबन्धनं सादृश्यनिबन्धनञ्चेति । तत्रैकत्वे सादृश्यावभासः सादृश्ये चैकत्वावभासः तदाभासमिति ॥ ९ ॥

तर्काभासमाह ॥ १० ॥

तज्ज्ञानमिति व्याप्तिलक्षणसम्बन्धज्ञानमित्यर्थः ॥ १० ॥

इदानीमनुमानाभासमाह ॥ ११ ॥

इदं वक्ष्यमाणमिति भावः ॥ ११ ॥

तत्र तदवयवाभासोपदर्शनेन समुदायरूपानुमानाभासमुपदर्शयितुकामः प्रथमावयवाभासमाह ॥ १२ ॥

इष्टमबाधितमित्यादि तल्लक्षणमुक्तं इदानीं तद्विपरीतं तदाभासमिति कथयति ॥ १३ ॥

असिद्धाद्विपरीतं तदाभासमाह ॥ १४ ॥

अबाधितविपरीतं तदाभासमावेदयन् स च प्रत्यक्षादिबाधित एवेति निदर्शयन्नाह ॥ १५ ॥

एतेषां क्रमेणोदाहरणमाह ॥ १६ ॥

स्पर्शनप्रत्यक्षेण ह्युष्णस्य स्पर्शात्मकोऽग्निरनुभूयते ॥ १६ ॥

अनुमानबाधितमाह ॥ १७ ॥

अत्र पक्षोऽपरिणामी शब्दः कृतकत्वादित्यनेन बाध्यते ॥ १७ ॥

आगमबाधितमाह ॥ १८ ॥

आगमे हि पुरुषाश्रितत्वाविशेषेऽपि परलोके धर्मस्य सुखहेतुत्वमुक्तम् ॥ १८ ॥

लोकबाधितमाह ॥ १९ ॥

लोके हि प्राण्यङ्गत्वेऽपि कस्यचिच्छुचित्वमशुचित्वञ्च। तत्र नरकपालस्याशुचित्वमेवेति लोकबाधितत्वम् ॥ १९ ॥

स्ववचनबाधितमाह ॥ २० ॥

इदानीं हेत्वाभासान् क्रमप्राप्तानाह ॥ २१ ॥

एषां यथाक्रमेण लक्षणं सोदाहरणमाह ॥ २२ ॥

सत्ता च निश्चयश्च सत्तानिश्चयौ असन्तौ सत्तानिश्चयौ यस्य स भवत्यसत्सत्तानिश्चयः ॥ २२ ॥

तत्र प्रथमभेदमाह ॥ २३ ॥

कथमस्यासिद्धत्वमित्याह ॥ २४ ॥

द्वितीयासिद्धभेदमुपदर्शयति ॥ २५ ॥

अस्याप्यसिद्धता कथमित्याशङ्कायामाह ॥ २६ ॥

तस्येति मुग्धबुद्धिं प्रतीत्यर्थः ॥ २६ ॥

अपरमसिद्धभेदमाह ॥ २७ ॥

अस्यासिद्धतायां कारणमाह ॥ २८ ॥

तेन सांख्येनाज्ञातत्वात्। तन्मते आविर्भावतिरोभावावेव प्रसिद्धौ नोत्पत्त्यादिरिति। अस्याप्यनिश्चयादसिद्धत्वमित्यर्थः ॥ २८ ॥

विरुद्धं हेत्वाभासमुपदर्शयन्नाह ॥ २९ ॥

कृतकत्वं ह्यपरिणामविरोधिना परिणामेन व्याप्तमिति ॥ २९ ॥

अनैकान्तिकं हेत्वाभासमाह ॥ ३० ॥

अपिशब्दान्न केवलं पक्षसपक्षयोरिति द्रष्टव्यम्। स च द्विविधो विपक्षे निश्चितवृत्तिः शङ्कितवृत्तिश्चेति ॥ ३० ॥

तत्राद्यं दर्शयन्नाह ॥ ३१ ॥

कथमस्य विपक्षे निश्चिता वृत्तिरित्याशङ्कयाह ॥ ३२ ॥

शङ्कितवृत्तिमुदाहरति ॥ ३३ ॥

अस्यापि कथं विपक्षे वृत्तिराशङ्क्यते इत्यत्राह ॥ ३४ ॥

अविरोधश्च ज्ञानोत्कर्षे वचनानामपकर्षादर्शनादिति निरूपितप्रायम् ॥ ३४ ॥

अकिञ्चित्करस्वरूपं निरूपयति ॥ ३५ ॥

तत्र सिद्धे साध्ये हेतुरकिञ्चित्कर इति उदाहरति ॥ ३६ ॥

कथमस्याकिञ्चित्करत्वमित्याह ॥ ३७ ॥

अपरञ्च भेदं प्रथमस्य दृष्टान्तीकरणद्वारेणोदाहरति ॥ ३८ ॥

अकिञ्चित्करत्वमिति शेषः ॥ ३८ ॥

अयञ्च दोषो हेतुलक्षणविचारावसर एव न वादकाले इति व्यक्तीकुर्वन्नाह ॥ ३९ ॥

दृष्टान्तोऽन्वयव्यतिरेकभेदाद् द्विविध इत्युक्तम्। तत्रान्वयदृष्टान्ताभासमाह ॥ ४० ॥

साध्यञ्च साधनञ्च उभयञ्च साध्यसाधनोभयानि। असिद्धानि तानि येष्विति विग्रहः ॥ ४० ॥

एतान्येकत्रैवानुमाने दर्शयति ॥ ४१ ॥

इन्द्रियसुखमसिद्धसाध्यम्। तस्य पौरुषेयत्वात्। परमाणुरसिद्धसाधनं तस्य मूर्त्तत्वात्। घटस्त्वसिद्धोभयः पौरुषेयत्वान्मूर्त्तत्वाच्च ॥ ४१ ॥

साध्यव्याप्तं साधनं दर्शनीयमिति दृष्टान्तावसरे प्रतिपादितम्। तद्विपरीतदर्शनमपि तदाभासमित्याह ॥ ४२ ॥

कुतोऽस्य तदाभासतेत्याह ॥ ४३ ॥

तस्याप्यमूर्त्तताप्राप्तेरित्यर्थः ॥ ४३ ॥

व्यतिरेकोदाहरणाभासमाह ॥ ४४ ॥

अपौरुषेयः शब्दो मूर्त्तत्वादित्यत्रैवासिद्धाः साध्यसाधनोभयव्यतिरेका यत्रेति विग्रहः। तत्रासिद्धसाध्यव्यतिरेकः परमाणुस्तस्यापौरुषेयत्वात्। इन्द्रियसुखमसिद्धसाधनव्यतिरेकम् आकाशन्त्वसिद्धोभयव्यतिरेकमिति ॥ ४४ ॥

साध्याभावे साधनव्यावृत्तिरिति व्यतिरेकोदाहरणप्रघट्टके व्यापितम्। तत्र तद्विपरीतमपि तदाभासमित्युपदर्शयति ॥ ४५ ॥

बालव्युत्पत्त्यर्थं तत्त्रयोपगम इत्युक्तम्। इदानीं तान् प्रत्येव कियद्धीनतायां प्रयोगाभासमाह ॥ ४६ ॥

तदेवोदाहरति ॥ ४७ ॥

अवयवत्रयप्रयोगे सतीत्यर्थः ॥ ४७ ॥

चतुरवयवप्रयोगे तदाभासमाह ॥ ४८ ॥

अवयवविपर्ययेऽपि तस्वमाह ॥ ४९ ॥

कथमवयवविपर्ययेऽपि प्रयोगाभास इत्याशङ्कायामाह ॥ ५० ॥

इदानीमागमाभासमाह ॥ ५१ ॥

उदाहरणमाह ॥ ५२ ॥

कश्चिन्माणवकैराकुलीकृतचेतास्तत्सङ्गपरिजिहीर्षया प्रतारणवाक्येन नद्या देशं तान् प्रस्थापयतीत्याप्तोक्तेरन्यत्वादागमाभासत्वम् ॥ ५२ ॥

प्रथमोदाहरणमात्रेणातुष्यन्नुदाहरणान्तरमाह ॥ ५३ ॥

अत्रापि सांख्यपशुः स्वदुरागमजनितवासनाहितचेता दृष्टेष्टविरुद्धं सर्वं सर्वत्र विद्यत इति मन्यमानस्तथोपदिशतीत्यनाप्तवचनत्वादिदमपि तथेत्यर्थः ॥ ५३ ॥

कथमनन्तरयोर्वाक्ययोस्तदाभासत्वमित्याशङ्कायामाह ॥ ५४ ॥

अविसंवादादकपप्रमाणलक्षणाभावान्न तद्विशेषरूपमपीत्यर्थः ॥ ५४ ॥

इदानीं संख्याभासमाह ॥ ५५ ॥

प्रत्यक्षपरोक्षभेदात् द्वैविध्यमुक्तम्। तद्विपरीत्येन प्रत्यक्षमेव प्रत्यक्षानुमाने एवेत्याद्यवधारणं संख्याभासम् ॥ ५५ ॥

प्रत्यक्षमेवैकमिति कथं संख्याभासमित्याह ॥ ५६ ॥

अतद्विषयत्वात् अप्रत्यक्षविषयत्वादित्यर्थः। शेषं सुगमम् ॥ प्रपञ्चितमेव एतत् संख्यात्वे प्रतिपत्तिनिराकरणे इति नेह पुनरुच्यते ॥ ५६ ॥

इतरवादिप्रमाणेयत्तावधारणमपि विघटत इति लोकायतिकदृष्टान्तद्वारेण नुमतेऽपि संख्याभासमिति दर्शयति ॥ ५७ ॥

यथा प्रत्यक्षादिभिरेकैकाधिकैः व्याप्तिं प्रतिपत्तुं न शक्यते सौगतादिभिः तथा प्रत्यक्षेण लौकायतिकैः परबुद्ध्यादिरपीत्यर्थः ॥ ५७ ॥

अथ परबुद्ध्यादिप्रतिपत्तिः प्रत्यक्षेण माभूत् अन्यस्मात्तु भविष्यति इत्याशङ्क्याह ॥ ५८ ॥

तच्छब्देन परबुद्ध्यादिरभिधीयते। अनुमानादेः परबुद्ध्यादिविषयत्वे प्रत्यक्षैकप्रमाणवादो हीयते इत्यर्थः ॥ ५८ ॥

अत्रोदाहरणमाह ॥ ५९ ॥

सौगतादीनामिति शेषः। किञ्च प्रत्यक्षैकप्रमाणवादिना प्रत्यक्षाद्येकाधिकप्रमाणवादिभिश्च स्वसंवेदनेन्द्रियप्रत्यक्षभेदोऽनुमानादिभेदश्च प्रतिभासभेदेनैव वक्तव्यो गत्यन्तराभावात्। स च तद्भेदो लौकायतिकं प्रति प्रत्यक्षानुमानयोरितरेषां व्याप्तिज्ञानप्रत्यक्षादिप्रमाणेष्वपीति सर्वेषां प्रमाणसंख्या विघटते ॥ ५९ ॥

एतदेव दर्शयति ॥ ६० ॥

इदानीं विषयाभासमुपदर्शयितुमाह ॥ ६१ ॥

कथमेषां तदाभासतेत्याह ॥ ६२ ॥

किञ्च तदेकान्तात्मकं तत्त्वं स्वयं समर्थं असमर्थं वा कार्य्यकारि स्यात्। प्रथमपक्षे दूषणमाह ॥ ६३ ॥

सहकारिसान्निध्यात्तत्कारणान्नेतिचेदत्राह ॥ ६४ ॥

वियुक्तावस्थायामकुर्व्वतः सहकारिसमवधानवेलायां कार्य्यकारिणः पूर्व्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामोपपत्तिरित्यर्थः। अन्यथा कार्य्यकरणाभावात्। प्रागभावावस्थायामिवेत्यर्थः ॥ ६४ ॥

अथ द्वितीयपक्षे दोषमाह ॥ ६५ ॥

अथ फलाभासं प्रकाशयन्नाह ॥ ६६ ॥

कुतः पक्षद्वयेऽपि तदाभासतेत्याशङ्कायामाद्यपक्षे तदाभासत्वे हेतुमाह ॥ ६७ ॥

फलमेव प्रमाणमेव वा भवेदितिभावः ॥ ६७ ॥

व्यावृत्त्या संवृत्त्यपरनामधेयया तत्कल्पनास्त्वित्याह ॥ ६८ ॥

अयमर्थो यथा फलाद्विजातीयात् फलस्य व्यावृत्त्या फलव्यवहारः तथा फलान्तरादपि सजातीयाद्व्यावृत्तिरप्यस्तीत्यफलत्वम् ॥ ६८ ॥

अत्रैवाभेदपक्षे दृष्टान्तमाह ॥ ६९ ॥

अत्रापि प्राक्तन्यैव प्रक्रिया योजनीया ॥ ६९ ॥

अभेदपक्षं निराकृत्य आचार्य्य उपसंहरति ॥ ७० ॥

भेदपक्षं दूषयन्नाह ॥ ७१ ॥

अथ यत्रैवात्मनि प्रमाणं समवेतं फलमपि तत्रैव समवेतम् इति समवायलक्षणप्रत्यासत्त्या प्रमाणफलव्यवस्थितिरिति नात्मान्तरे तत्प्रसङ्ग इति चेत्तदपि न सूक्तमित्याह ॥ ७२ ॥

समवायस्य नित्यत्वाद्व्यापकत्वाच्च सर्व्वात्मनामपि समवायसमानधर्म्मकत्वान्न ततः प्रतिनियम इत्यर्थः ॥ ७२ ॥

इदानीं स्वपरपक्षसाधनदूषणव्यवस्थामुपदर्शयति ॥ ७३ ॥

वादिना प्रमाणमुपन्यस्तम्। तच्च प्रतिवादिना दुष्टतयोद्भावितं पुनर्वादिना परिहृतम्।

तदेव तस्य साधनं भवति प्रतिवादिनश्च दूषणमिति। यदा तु वादिना प्रमाणाभासमुक्तं प्रतिवादिना तथैवोद्भावितं वादिना चापरिहृतं तदा तद्वादिनः साधनाभासो भवति प्रतिवादिनश्च भूषणमिति ॥ ७३ ॥

अथोक्तप्रकारेणाशेषविप्रतिपत्तिनिराकरणद्वारेण प्रमाणतत्त्वं स्वप्रतिज्ञातं परीक्ष्य नयादितत्त्वमन्यत्रोक्तमिति दर्शयन्नाह ॥ ७४ ॥

सम्भवदिदन्यमानम्। अन्यत् प्रमाणतत्त्वात् नयस्वरूपं शास्त्रान्तरप्रसिद्धम्। विचारणीयमिह युक्त्या प्रतिपत्तव्यम्। तत्र मूलनयौ द्वौ द्रव्यार्थिकपर्य्यायार्थिकभेदात्। तत्र द्रव्यार्थिकस्त्रेधानैगमसंग्रहव्यवहारभेदात्। पर्य्यायार्थिकश्चतुर्द्धा ऋजुसूत्रशब्दसमभिरूढैवम्भूतभेदात्। अन्योन्यगुणप्रधानभूतभेदाभेदप्ररूपणो नैगमकः। नैकंगमो नैगम इति निरुक्तेः सर्वथाभेदवादः तदाभासः। प्रतिपक्षव्यपेक्षः सन्मात्रग्राही संग्रहः। ब्रह्मवादस्तदाभासः। संग्रहगृहीतभेदको व्यवहारः। काल्पनिको भेदस्तदाभासः। शुद्धपर्य्यायग्राही प्रतिपक्षसापेक्षः ऋजुसूत्रः। क्षणिकैकान्तनयः तदाभासः। कालकारकलिङ्गानां भेदात् शब्दस्य कथञ्चिदर्थभेदकथनं शब्दनयः। अर्थभेदं विना शब्दानामेव नानात्वैकान्तस्तदाभासः। पर्य्यायभेदात् पदार्थनानात्वनिरूपकः समभिरूढः। पर्य्यायनानात्वमन्तरेणापीन्द्रादिभेदकथनं तदाभासः। क्रियाश्रयेण भेदप्ररूपणमित्थम्भावः। क्रियानिरपेक्षत्वेन क्रियावाचकेषु काल्पनिको व्यवहारस्तदाभास इति। इति नयतदाभासलक्षणं संक्षेपेणोक्तम्। विस्तरेण नयचक्रात् प्रतिपत्तव्यम् ॥

अथवा सम्भवदिदन्यमानमन्यद्वादलक्षणं पत्रलक्षणं वान्यत्रोक्तमिह द्रष्टव्यम्। तथाचाह। समर्थवचनं वाद इति।

प्रसिद्धावयवं वाक्यं स्वेष्टस्यार्थस्य साधकम्।
साधुगूढपदप्रायं पत्रमाहुरनाकुलम् ॥ इति ॥ ७४ ॥

इदानीमात्मनः प्रारब्धनिर्वहणमौद्धत्यपरिहारञ्च दर्शयन्नाह ॥

व्यधां कृतवानस्मि। किमर्थं संविदे। कस्य मादृशः। अहञ्च कथम्भूतः इत्याह बालो मन्दमतिः। अनौद्धत्यसूचकं वचनमेतत्। तत्त्वज्ञत्वञ्च प्रारब्धनिर्वहणादेवावसीयते। किन्तत् परीक्षामुखम्। तदेव निरूपयति। आदर्शमिति। कयोः? हेयोपादेयतत्त्वयोः। यथैवादर्शः आत्मनोऽलङ्कारमण्डितस्य सौरूप्यं वैरूप्यं वा प्रतिबिम्बोपदर्शनद्वारेण सूचयति तथेदमपि हेयोपादेयतत्त्वं साधनदूषणोपदर्शनद्वारेण निश्चाययतीत्यादर्शत्वेन निरूप्यते। क इव परीक्षादक्षवत्। परीक्षादक्ष इव। यथा परीक्षादक्षः स्वप्रारब्धशास्त्रं निरूढवांस्तथाहमपीत्यर्थः ॥ ० ॥

अकलङ्कशशाङ्कैर्यत् प्रकटीकृतमखिलमाननिभनिकरम्।
तत् संक्षिप्तं सूरिभिरुरुमतिभिर्व्यक्तमेतेन ॥

इति परीक्षामुखलघुवृत्तौ प्रमाणाद्याभाससमुद्देशः षष्ठः परिच्छेदः ॥

श्रीमान् वैजेयनामाभूदग्रणी गुणशालिनाम्।
बदरीपालवंशालिव्योमद्युमणिरूर्जितः ॥ १ ॥

तदीयपत्नी भुवि विश्रुतासीत् नाणाम्बनामा गुणशालधीमा।
यां रेवतीति प्रथितांम्बिकेति प्रभावतीति प्रवदन्ति सन्तः ॥ २ ॥

तस्यामभूद्विश्वजनीनवृत्तिर्दानाम्बुवाहो भुवि हीरपाख्यः ।
स्वगोत्रविस्तारनभोंऽशुमाली सम्यक्त्वरत्नाभरणार्चिताङ्गः ॥ ३ ॥

तस्योपरोधवशतो विशदोरुकीर्त्तेः
र्माणिक्यनन्दिकृतशास्त्रमगाधबोधम् ।
स्पष्टीकृतं कतिपयैर्वचनैरुदारैः
र्बालप्रबोधकरमेतदनन्तवीर्य्यैः ॥ ४ ॥

इति प्रमेयरत्नमालापरनामधेया परीक्षामुखवृत्तिः समाप्ता ॥



INDEX.

# परीक्षामुखसूत्र-लघुवृत्तिः ।

## अ

## आ

ऊ



ऋ



ए

## ऐ



## औ



## क

ख



ग

## द

## य

श

## ह